# ऋतुसंहारकाव्यम् ।

महाकवि श्रीकालिदासविरचितम् ।

पण्डितकुलपतिना

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया

समलङ्कृतम् ।

तृतीय संस्करणम् ।

कलिकातानगर्य्याम्

सिद्धेश्वरयन्त्रे

मुद्रितः ।

ई १८९३ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

PANDIT JIBANANDA VIDYASAGARA B, A.

Superintendent Free Sanskrit College, Calcutta.

# ऋतुसंहारः।

## ग्रीष्मवर्णनम्।

### प्रथमः सर्गः।

प्रचण्डसूर्य्यः स्पृहणीयचन्द्रमाः
सदावगाहक्षतवारिसञ्चयः।
दिनान्तरम्योऽभ्युपशान्तमन्मथो
निदाघकालोऽयमुपागतः प्रिये!॥ १॥
निशाः शशाङ्कक्षतनीलराजयः
क्वचिद्विचित्रं जलयन्त्रमन्दिरम्।

ऋतवः षट् ग्रीष्मादयः तेषां संहारः सङ्क्षेपेण वर्णनं यत्र स इति ग्रन्थस्य विशेषणम्।

काव्यमिदम् ऋतुसंख्यया षट् सर्गात्मकं महाकविः कालिदासो निजकान्तां सम्बोध्य विरचयामास। तत्रादौ प्राथम्यात् ग्रीष्ममेव वर्णयति प्रचण्डसूर्य्य इति। हे प्रिये! प्रचण्डः तीक्ष्णः सूर्य्यः यत्र सः असह्यसूर्य्यताप इत्यर्थः स्पृहणीयः कमनीयः चन्द्रमाः यत्र सः मनोहरचन्द्रकिरण इत्यर्थः सदा अवगाहेन जलावतरणेन क्षताः तनूकृताः वारीणां सञ्चयाः सङ्घाः यत्र तथोक्तः दिनान्ते सायं समये रम्यः सुखकरः तथा अभ्युपशान्तः वसन्तापगमात् क्षीणः मन्मथः कामः यत्र तादृशः अयं निदाघकालः ग्रीष्मसमयः उपागतः उपस्थितः। सर्गेऽस्मिन्नेकविंशात् वंशस्थविलं वृत्तं "वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात्॥ १॥

मणिप्रकाराः सरसं च चन्दनं
शुचौ प्रिये ! यान्ति जनस्य सेव्यताम् ॥ २ ॥
सुवासितं हर्म्यतलं मनोहरम्
प्रियामुखोच्छ्वासविकम्पितं मधु।
सुतन्त्रिगीतं मदनस्य दीपनं
शुचौ निशीथेऽनुभवन्ति कामिनः ॥ ३ ॥
नितम्बबिम्बैः सदुकूलमेखलैः

निशा इति। हे प्रिये ! शुचौ ग्रीष्मे शशाङ्केन चताः विनष्टा नीलराजयः नीलानां लक्षणया नीलवर्णतमसां राजयः समूहाः यासु तथोक्ताः चन्द्रकिरणशालिन्य इत्यर्थः निशाः रजन्यः क्वचित् कुत्रचित् प्रदेशे विचित्रं मनोरमं जलयन्त्र-मन्दिरं जलौयशिल्पशाला (फोयारा) युक्तगृहमित्यर्थः मणीनां रत्नानां प्रकाराः समूहाः विविधजातयो मणय इत्यर्थः प्रस्तर-जातित्वात् शीतला इति भावः तथा सरसम् आर्द्रं चन्दनञ्च जनस्य सेव्यतां भोग्यतां यान्ति प्राप्नुवन्तीत्यर्थः शरीरोत्ताप-शान्त्यर्थं सर्वैरेव शीतलानि द्रव्याणि व्यवक्रियन्ते इति भावः॥२॥

सुवासितमिति। शुचौ ग्रीष्मे कामिनः विलासिनः निशीथे रजन्याम् अर्द्धरात्रवाचकस्यापि निशीथशब्दस्यात्र लक्षणया रजनीसामान्यमर्थोऽवगन्तव्यः। सुवासितं सुगन्धद्रव्यैः सुरभी-कृतम् अतएव मनोहरं मनःप्रीतिजननं हर्म्यतलम् इष्टकगृहं मदनस्य कामस्य दीपनं कामवृद्धिकरमित्यर्थः प्रियायाः कान्तायाः मुखोच्छ्वासेन मुखमारुतेन। (कान्तया पीता-वशिष्टतया तन्मुखमारुतसंयोगादिति भावः) विकम्पितं विलु-लितं मधु मद्यं तथा सुतन्त्रि सुष्ठुतानसमन्वितं गीतं गानञ्च अनुभवन्ति सेवन्ते ग्रीष्मे उक्तप्रकारेण विलसन्तीति भावः ॥३॥

स्तनैः सहाराभरणैः सचन्दनैः।
शिरोरुहैः स्नानकषायवासितैः
स्त्रियो निदाघं शमयन्ति कामिनाम् ॥४॥
नितान्तलाक्षारसरागलोहितैः
नितम्बिनीनाञ्चरणैः सनूपुरैः।
पदे पदे हंसरुतानुकारिभिः
जनस्य चित्तं क्रियते समन्मथम् ॥ ५ ॥
पयोधराश्चन्दनपङ्कशीतला-
स्तुषारगौरार्पितहारशेखराः।

नितम्बनिम्बैरिति। स्त्रियः कामिन्यः दुकूलानि सूक्ष्म-वस्त्राणि मेखलाः चन्द्रहाराश्च तत्सहितैः नितम्बविम्बैः कट्याः पश्चाद्भागैः। पश्चान्नितम्बः स्त्रीकट्या इत्यमरः। सहाराभरणैः हारालङ्कृतैः सचन्दनैः चन्दनेन आर्द्रीकृतैः स्तनैः तथा स्नान-कषायेण स्नानीयसुगन्धद्रव्येण वासितैः सुरभीकृतैः शिरोरुहैः केशैः कामिनां विलासिनां निदाघं ग्रीष्मं लक्षणया तत्सन्ताप-मित्यर्थः शमयन्ति लघयन्ति तादृशनितम्बादिप्रदर्शनस्य काम-वर्द्धनत्वात् अन्यमनस्कतया कामिनो ग्रीष्मसन्तापं विस्मर-न्तीति भावः॥ ४॥

नितान्तेति। नितान्तः गाढ़ः यः लाक्षारसः अलक्तकरसः तेन रागः रञ्जनं तेन लोहिताः रक्ताः तैः सनूपुरैः नूपुर-सहितैः अतएव पदे पदे प्रतिपादविन्यासे हंसरुतानुकारिभिः हंसध्वनि मनुकुर्वद्भिः नितम्बिनीनां नारीणां चरणैः जनस्य चित्तं समन्मथं सकामं क्रियते विलासिनीनां तादृशपदविन्या-सस्य मदनोद्दीपकत्वादिति भावः॥ ५॥

नितम्बदेशाश्च सहेममेखलाः
प्रकुर्व्वते कस्य मनो न सोत्सुकम् ॥ ६ ॥
समुद्गतस्वेदचिताङ्गसन्धयो
विमुच्य वासांसि गरूणि साम्प्रतम्।
स्तनेषु तन्वंशुकमुन्नतस्तना
निवेशयन्ति प्रमदाः सयौवनाः ॥ ७ ॥
सचन्दनाम्बुव्यजनोद्भवानिलैः
सहारयष्टिस्तनमण्डलार्पणैः

पयोधरा इति। चन्दनानि एव पङ्कानि तैः शीतलाः तथा तुषारवद् गौराः अर्पिता विन्यस्ता हाराः शेखरे उपरिभागे येषां तादृशाः समुज्ज्वलहारशोभिता इत्यर्थः पयोधराः स्तनाः तथा हेममेखलाभिः काञ्चनरशनाभिः सह वर्त्तमाना नितम्बदेशाश्च कामिनीनामिति शेषः कस्य जनस्य मनः सोत्सुकं समाकुलं न प्रकुर्वते अपितु सर्वस्यैव मनः समाकुलयन्तीत्यर्थः ॥ ६ ॥

समुद्गतेति। सयौवनाः युवत्यः अतएव उन्नतस्तनाः प्रमदाः समुद्गतैः समुत्थितैः स्वेदैः घर्मविन्दुभिः चिताः व्याप्ताः अङ्गानां सन्धयः सन्धिस्थानानि यासां तथाभूताः घर्माक्तकलेवरा इत्यर्थः सत्यः साम्प्रतम् इदानीं गुरूणि वासांसि वस्त्राणि विमुच्य त्यक्त्वा स्तनेषु तनु सूक्ष्मम् अंशुकं वसनं निवेशयन्ति अर्पयन्ति ॥ ७ ॥

सचन्दनेति। अद्य अधुना चन्दनाम्बुना चन्दनाक्तजलेन सहितं यत् व्यजनं तस्मादुद्भवाः जाताः ये अनिलास्तैः हारयष्ट्या सहितानि स्तनमण्डलानि सहारयष्टिस्तनमण्डलानि तेषाम् अर्पणैः कान्तोरसि प्रदानैरित्यर्थः तथा वल्लकी वीणा तत्सहितानि यानि काकलिगीतानि सूक्ष्ममधुरगानानि तान्येव

सवल्लकीकाकलिगीतनिस्वनैः
प्रबुध्यते सुप्त इवाद्य मन्मथः ॥ ८ ॥
सितेषु हर्म्येषु निशासु योषितां
सुखप्रसुप्तानि मुखानि चन्द्रमाः।
विलोक्य नूनं भृशमुत्सुकश्चिरं
निशाक्षये याति ह्रियेव पाण्डुताम् ॥ ९ ॥
असह्यवातोद्धतरेणुमण्डला
प्रचण्डसूर्य्यातपतापिता मही
न शक्यते द्रष्टुमपि प्रवासिभिः
प्रियावियोगानलदग्धमानसैः ॥ १० ॥

निस्वनाः शब्दाः तैः वीणायन्त्रसम्बलितमनोहरगानैरित्यर्थः सुप्तः वसन्तापगमादिति भावः मन्मथः कामः प्रबुध्यते इवेत्युत्प्रेक्षा। तादृशव्यजनादीनि कामोद्दीपकानीति भावः ॥ ८ ॥

सितेष्विति। चन्द्रमाः चन्द्रः निशासु रात्रिषु सितेषु सुधाधवलितेषु हर्म्येषु अट्टालिकासु निद्रितानां योषितां नारीणां सुखप्रसुप्तानि सुनिद्रितानि मुखानि चिरं दीर्घकालं विलोक्य भृशम् अत्यर्थम् उत्सुकः व्याकुलः कथं मत्तोऽपि चारुतरमिदम् अतोऽनेनाहं पराजित इति चिन्ताकुलः सन्निति भावः नूनं निश्चितं निशाक्षये प्रभाते ह्रियेव लज्जयेव इति इति उत्प्रेक्षा पाण्डुतां पराजयलक्षणाम् औज्ज्वल्यरहितां श्वेततां याति गच्छति, अथवा नूनमिति वितर्के, चन्द्रः पाण्डुतां यातीति तर्कयामीत्यर्थः ॥ ९ ॥

असह्येति। असह्यानि सोढुमशक्यानि वातोद्धतानि पवनोत्थितानि रेणुमण्डलानि रजस्तोमाः यस्यां सा तथा प्रचण्डः

मृगाः प्रचण्डातपतापिता भृशं
तृषा महत्या परिशुष्कतालवः।
वनान्तरे तोयमिति प्रधाविता-
निरीक्ष्य भिन्नाञ्जनसन्निभं नभः ॥ ११ ॥
सविभ्रमैः सस्मितजिह्मवीक्षितै-
र्विलासवत्यो मनसि प्रवासिनाम्।
अनङ्गसन्दीपनमाशु कुर्वते
यथा प्रदोषाः शशिचारुभूषणाः ॥ १२ ॥

अतितीव्रः यः सूर्य्यातपः तेन तापिता मही पृथिवी प्रियावियोगः कान्ताविच्छेद एव अनलः तेन दग्धानि मानसानि येषां तैः प्रवासिभिः देशान्तरस्थैर्जनैः द्रष्टुमपि निरीक्षितुमपि न शक्यते तादृशसमये प्रियासहावस्थानमेव युक्तमिति भावः॥१०

मृगा इति। मृगाः प्रचण्डेन आतपेन भृशम् अत्यर्थं तापिताः अतएव महत्या तृषया तृष्णया परिशुष्काः तालवः येषां तादृशाः सन्तः भिन्नाञ्जनसन्निभं भिन्नेन मर्दितेन अञ्जनेन सन्निभं सदृशं नभः आकाशं निरीक्ष्य वनान्तरे तोयं जलमस्तीति मत्वेति शेषः प्रधाविताः धावन्तीत्यर्थः इयमेव मृगतृष्णेति ज्ञेयम् ॥ ११ ॥

सविभ्रमैरिति। विलासवत्यः वाराङ्गनाः सविभ्रमैः विभ्रमसहितैः सविलासैरित्यर्थः सस्मितानि ईषद्धास्यसहितानि यानि जिह्मानि वक्राणि वीक्षितानि दर्शनानि कटाक्षपाता इत्यर्थः तैः शशिचारुभूषणा चन्द्रकिरणालङ्कृताः प्रदोषाः यथा रजन्य इव प्रवासिनां मनसि आशु शीघ्रम् अनङ्गसन्दीपनं कामोत्तेजनं कुर्वते कामं वर्द्धयन्तीत्यर्थः ॥ १२ ॥

रवेर्मयूखैरभितापितो भृशं
विदह्यमानः पथि तप्तपांशुभिः।
अवाङ्मुखो जिह्मगतिः श्वसन् मुहुः
फणी मयूरस्य तले निषीदति ॥ १३ ॥
तृषा महत्या हतविक्रमोद्यमः
श्वसन् मुहुर्दूरविदारिताननः।
न हन्त्यदूरेऽपि गजान् मृगेश्वरो
विलोलजिह्वश्चलिताग्रकेशरः ॥ १४ ॥
विशुष्ककण्ठाहृतशीकराम्भसो

रवेरिति। रवेः सूर्य्यस्य मयूखैः किरणैः भृशम् अतिशयेन अभितापितः तथा पथि मार्गे तप्तपांशुभिः उष्णरजोभिः विदह्यमानः फणी सर्पः अवाङ्मुखः अधोमुखः मुखोन्नमने सूर्य्यकिरणदर्शनस्यासह्यत्वादिति भावः। जिह्मगतिः वक्रगतिः उत्तापक्लासावबोधेनेति भावः तथा मुहुर्वारं वारं श्वसन् मयूरस्य शत्रोरपीति शेषः तले अधश्छायायामित्यर्थः निषीदति अवतिष्ठते विश्राम्यतीति वार्थः इत्थं व्याकुलता यत् स्वाभाविकवैरभावोऽपि नास्तीति भावः ॥ १३ ॥

तृषेति। मृगेश्वरः मृगेन्द्रः सिंह इत्यर्थः महत्या तृषा तृष्णया हतः विनाशितः विक्रमोद्यमः पराक्रमचेष्टा यस्य तादृशः विक्रमचेष्टाहीन इत्यर्थः मुहुः वारंवारं श्वसन् दूरम् अत्यर्थं विदारितम् आननं येन तथाभूतः व्यात्तानन इत्यर्थः विलोला चञ्चला जिह्वा यस्य तथोक्तः तथा चलितानि अग्रकेशराणि जटाग्राणि यस्य तादृशः सन् अदूरे समीपेऽपि स्थितानिति शेषः गजान् न हन्ति न हिनस्ति ग्रीष्मव्याकुलतयेति भावः ॥ १४ ॥

गभस्तिभिर्भानुमतोऽभितापिताः
प्रवृद्धतृष्णोपहता जलार्थिनो
न दन्तिनः केशरिणोऽपि बिभ्यति ॥ १५ ॥
हुताग्निकल्पैः सवितुर्गभस्तिभिः
कलापिनः क्लान्तशरीरचेतसः।
न भोगिनं घ्नन्ति समीपवर्त्तिनं
कलापचक्रेषु निवेशिताननम् ॥ १६ ॥
सभद्रमुस्तं परिशुष्ककर्दमं
सरः खनन्नायतपीवमण्डलैः।

विशुष्क इति। दन्तिनः हस्तिनः विशुष्केण कण्ठेन अहृतम् अप्राप्तं शीकराम्भः जलविन्दु यैः ते, भानुमतः सूर्य्यस्य गभस्तिभिः किरणैः अभितापिताः, प्रवृद्धा अतिशयिता या तृष्णा तया उपहताः अतएव जलार्थिनः केवलजलकाङ्क्षिणः सन्तः केशरिणोऽपि मृगेन्द्रादपि शत्रोरपि इति भावः न बिभ्यति न भयं प्राप्नुवन्तीत्यर्थः, एतादृशी व्याकुलता यत् प्राणविनाशेऽपि नास्ति शङ्केति भावः ॥ १५ ॥

हुताग्निकल्पैरिति। कलापिनः मयूराः हुता ये अग्नयः तेभ्यः ईषदूनाः तैः सवितुः सूर्य्यस्य गभस्तिभिः किरणैः क्लान्तानि शरीराणि चेतांसि च येषां तथाभूताः सन्तः कलापचक्रेषु वर्हमण्डलेषु तच्छायास्वित्यर्थः निवेशितम् आननं येन तथोक्तं समीपवर्त्तिनम् अपीति शेषः भोगिनं भुजङ्गं न घ्नन्ति न नाशयन्ति व्याकुलतातिरेकात् स्वाभाविकशत्रुभावोऽपि निरस्त इति भावः ॥ १६ ॥

सभद्रमुस्तमिति। रवेः सूर्य्यस्य मयूखैः भृशम् अत्यन्तम् अभितापितः वराहयूथः शूकरसङ्घः आयतानि दीर्घाणि यानि

रवेर्मयूखैरभितापितो भृशं
वराहयूथो विशतीव भूतलम् ॥ १७ ॥
विवस्वता तीव्रतरांशुमालिना
सपङ्कतोयात् सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः
फणातपत्रस्य तले निषीदति ॥ १८ ॥
समुद्धृताशेषमृणालजालकं
विपन्नमीनं द्रुतभीतसारसम् ।

पीत्वमण्डलानि स्वमुखाग्राणि तैः, भद्रमुस्ताभिः मुस्तविशेषैः सहितं तथा परिशुष्काणि कर्दमानि यस्मिन् तादृशं सरः खनन् भूतलं भुवः पृथिव्यास्तलम् अधोभागं पातालमित्यर्थः विशतीव उपरि आतपतापस्यासह्यत्वात् पातालं प्रविशतीवेत्युत्प्रेक्षा ॥ १७ ॥

विवस्वतेति । भेकः मण्डूकः तीव्रतरांशुमालिना अतितीक्ष्णकिरणेन विवस्वता सूर्य्येण अभितापितः सन्तापितः सन् सपङ्कतोयात् पङ्कयुक्तं तोयं पङ्कतोयं तेन सहितात् पङ्किलजलयुक्तात् सरसः तापितादिति शेषः उत्प्लुत्य उल्लम्फ्य तृषितस्य तृषाकुलस्य भोगिनः सर्पस्य शत्रोरपीति शेषः फणातपत्रस्य फणा एव आतपत्रम् आतपात् त्रायत इति आतपत्रं छत्रं तस्य तले निषीदति स्थितिं लभते व्याकुलतातिशय्यात् शत्रुमित्रभावविवेको नास्तीति भावः ॥ १८ ॥

समुद्धृतेति । परस्परस्य उत्पीड़नाय प्रतिद्वन्द्विभावेनाक्रमणाय संहतैः मिलितैः गजैः सरः सरोवरं समुद्धृतानि अशेषाणि समग्राणि मृणालानां जालकानि वृन्दानि यस्मात् तत् विपन्ना

परस्परोत्पीड़नसंहतैर्गजैः
कृतं सरः सान्द्रविमर्दकर्दमम् ॥ १९ ॥
रविप्रभोद्भिन्नशिरोमणिप्रभो-
विलोलजिह्वाद्वयलीढ़मारुतः ।
विषाग्निसूर्य्यातपतापितः फणी
न हन्ति मण्डूककुलं तृषाकुलः ॥२०॥
सफेनलोलायतवक्त्रसम्पुटं
विनिःसृतालोहितजिह्वमुन्मुखम् ।

नष्टाः मीना मत्स्या यस्य तादृशं द्रुताः पलायिताः भीताः सारसाः जलपक्षिविशेषाः यस्मात् तथोक्तं तथा सान्द्रः निविड़ः घनीभूत इत्यर्थः विमर्देन परस्परास्कन्दनेन कर्दमः यत्र तथा-भूतं कृतम् । पिपासाकुलतया सर्वेषामेव एकत्र सरसि जल-पानोद्यतया परस्परेण तद्व्याघातादुत्पीड़नमिति ध्येयम् ॥१९॥

रविप्रभेति । रवेः सूर्य्यस्य प्रभाभिः किरणैः उद्भिन्ना उज्ज्व-लिता शिरोमणेः शिरःस्थितस्य मणेः प्रभा यस्य तादृशः विलो-लेन चञ्चलेन जिह्वाद्वयेन द्विजिह्वत्वादिति भावः लीढः पीतः मारुतः वायुः येन तथोक्तः तथा विषेण स्वमुखस्थितेन गरलेन अग्निना दावानलेन सूर्य्यातपेन च तापितः फणी पन्नगः तृषा-कुलः पिपासार्त्तः सन् मण्डूककुलं भेकवृन्दं न हन्ति न नाश-यति न भक्षयतीति वा पिपासार्त्तेन पानीयमपीत्वा अन्यत् भक्ष्यं भोक्तुं न शक्यते इति भावः ॥ २० ॥

सफेनेति । महिषीकुलं महिषीसंहतिः सफेनं फेनमुद्वमत् लोलं चञ्चलम् आयतं दीर्घं वक्त्रं मुखमेव सम्पुटं पात्रविशेषः यस्य तादृशं विनिःसृता वहिर्गता आलोहिता ईषद्रक्ता जिह्वा यस्य तथाभूतम् उन्मुखम् ऊर्द्ध्वमुखं तथा पिपासया आकुलम्

तृषाकुलं निःसृतमद्रिगह्वराद्
गवेषमाणं महिषीकुलं जलम् ॥ २१ ॥
पटुतरदवदाहोच्छुष्कशष्पप्ररोहाः
परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः।
दिनकरपरितापक्षीणतोयाः समन्ताद्
विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः॥२२॥
श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः
कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम्।

अतएव जलं गवेषमाणम् अन्विष्यत् सत् अद्रिगह्वरात् गिरिविवरात् निःसृतं निर्गच्छतीत्यर्थः वर्त्तमाने क्तप्रत्ययः ॥ २१ ॥

पटुतरेति। वनान्ताः वनप्रदेशाः पटुतरः समधिकतरः यः दवः वनाग्निः तस्य दाहेन उच्छुष्काः शष्पाणां नवतृणानां प्ररोहाः अङ्कुरा येषु तादृशाः परुषेण प्रबलेन पवनवेगेन उत्क्षिप्तानि संशुष्काणि पर्णानि येभ्यः तथोक्ताः तथा दिनकरस्य रवेः परितापेन क्षीणानि तोयानि येषु तथाभूताः अतएव समन्तात् चतुर्दिक्षु वीक्ष्यमाणा दृश्यमानाः सन्तः उच्चैरत्यन्तं भयं विदधति जनयन्तीत्यर्थः। इत आरभ्य आसर्गसमाप्तेः मालिनी वृत्तम्। ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥ २२ ॥

श्वसितीति। विहगवर्गः पक्षिगणः शीर्णानि गलितानि पर्णानि येभ्यः ते शीर्णपर्णा ये द्रुमाः वृक्षाः तेषु तिष्ठतीति तथोक्तः पत्रहीनतरुस्थित इत्यर्थः श्वसिति कथञ्चित् प्राणिति छायाभावादिति भावः। कपिकुलं वानरसमूहः क्लान्तं तापाकुलं सत् अद्रेः पर्वतस्य निकुञ्जं लतादिवेष्टितस्थानं निरातप-

भ्रमति गवययूथः सर्वतस्तोयमिच्छन्
शरभकुलमजिह्मं प्रोद्धरत्यम्बुकूपात् ॥२३॥
विकचनवकुसुम्भस्वच्छसिन्दूरभासा
प्रबलपवनवेगोद्भूतवेगेन तूर्णम्।
तटविटपलताग्राऽऽलिङ्गनव्याकुलेन
दिशि दिशि परिदग्धा भूमयः पावकेन ॥२४॥
ज्वलति पवनवृद्धः पर्वतानां दरीषु
स्फुटति पटुनिनादैः शुष्कवंशस्थलीषु।

मिति भावः उपयाति प्रविशतीत्यर्थः गवयानां गोसदृशानां मृगाणां यूथः वृन्दं तोयं सलिलम् इच्छन् अभिलषन् सर्वतः समन्तात् भ्रमति तथा सरभाणाम् अष्टापदमृगविशेषाणां कुलम् अजिह्मम् अवक्रं श्रेणीबद्धमित्यर्थः सत् कूपात् अम्बु जलं प्रोद्धरति उद्धृत्य गृह्णातीत्यर्थः ॥ २३ ॥

विकचेति। विकचं विकसितं यत् नवं कुसुम्भं पुष्पविशेषः तद्वत् स्वच्छं निर्मलं यत् सिन्दूरं तस्य भा इव भा दीप्तिर्यस्य तादृशेन पावकेन अग्निना प्रबलेन पवनवेगेन उद्भूतः उत्पन्नः वेगः तेजोऽतिरिक्तः यस्य तथाभूतेन तथा तरूणां विटपानां शाखानां लतानाञ्च यानि अग्राणि तेषामालिङ्गनाय दहनायेत्यर्थः व्याकुलेन त्वरावता इति यावत् सता दिशि दिशि समन्तात् भूमयः परिदग्धाः भस्मीकृताः भस्मीक्रियन्ते इत्यर्थः वर्त्तमाने क्त प्रत्ययः ॥ २४ ॥

ज्वलतीति। दवाग्निः वनानलः पवनेन वृद्धः वृद्धिं गतः सन् पर्वतानां दरीषु गुहासु ज्वलति शुष्कवंशस्थलीषु पटुनिनादैः प्रबलशब्दैः स्फुटति विकाशते क्षणमध्ये क्षणेन अचि-

प्रसरति तृणमध्ये लब्धवृद्धिः चणेन
ग्लपयति मृगवर्गं प्रान्तलग्नो दवाग्निः ॥ २५॥
बहुतर इव जातः शाल्मलीनां वनेषु
स्फुरति कनकगौरः कोटरेषु द्रुमाणाम् ।
परिणतदलशाखानुत्पतत्याशु वृचाद्
भ्रमति पवनधूतः सर्वतोऽग्निर्वनान्ते ॥ २६ ॥
गजगवयमृगेन्द्रा वह्निसन्तप्तदेहाः
सुहृद इव समन्ताद् द्वन्द्वभावं विहाय ।
हुतवहपरिखेदादाशु निर्गत्य कचाद्
विपुलपुलिनदेशान्निम्नगां संविशन्ति ॥ २७ ॥

रेण लब्धवृद्धिः वर्द्धितः सन् प्रसरति समन्तात् व्याप्नोति तथा प्रान्तेषु देहविभागेषु लग्नः सन् मृगवर्गं ग्लपयति नाशयति॥२५

बहुतर इति। शाल्मलीनां वनेषु जातः बहुतरः राशीभूतः अग्निः द्रुमाणां वृचाणां कोटरेषु विवरेषु कनकवत् गौरः सन् स्फुरतीव परिणताः परिशुष्काः दलशाखाः पत्रविटपानि यस्य तादृशात् वृचात् आशु शीघ्रम् उत्पतति ऊर्द्धं गच्छति तथा पवनधूतः वायुचालितः सन् सर्वतः सर्वस्मिन् एव वनान्ते अरण्यप्रदेशे भ्रमति ॥ २६ ॥

गजेति। गजाः गवयाः मृगविशेषाः मृगेन्द्राः सिंहाश्च वह्निसन्तप्तदेहाः दावानलतापितकलेवराः सन्तः सुहृद इव बन्धव इव समन्तात् सर्वतोभावेनेत्यर्थः द्वन्द्वभावं वैरिभावं विहाय परित्यज्य हुतवहस्य अग्नेः परिखेदः परितापः यत्र तस्मात् कचात् वनात् आशु शीघ्रं निर्गत्य विपुलः विशालः पुलिनदेशः सैकतप्रदेशो यस्याः तादृशीं निम्नगां नदीं संविशन्ति आश्रयन्तीत्यर्थः ॥ २७ ॥

कमलवनचिताम्बुःपाटलामोदरम्यः
सुखसलिलनिषेकः सेव्यचन्द्रांशुहारः।
व्रजतु तव निदाघः कामिनीभिः समेतो
निशि सुललितगीतैर्हर्म्यपृष्ठे सुखेन ॥ २८ ॥

इति श्रीकालिदासकृतौ ऋतुसंहारकाव्ये ग्रीष्म-
वर्णनो नाम प्रथमः सर्गः ॥ १ ॥

---

## वर्षावर्णनम्।

### द्वितीयः सर्गः।

स-शीकराम्भोधरमत्तकुञ्जरः
तडित्पताकोऽशनिशब्दमर्दलः।

कमलेति। ( हे प्रिये! ) कमलानां पद्मानां वनैः चितानि व्याप्तानि अम्बूनि यत्र सः पाटलानां पाटलाख्यपुष्पाणाम् आमोदेन रम्यः मनोहरः सुखः सुखावहः सलिलनिषेकः जलावगाहः यत्र तादृशः तथा सेव्यः स्पृहणीयः चन्द्रांशुः चन्द्रकिरणः हारश्च यस्मिन् तथाभूतः कामिनीभिः निजकान्ताभिः समेतः निदाघः ग्रीष्मः ( नायक इति ध्वन्यते ) निशि रात्रौ हर्म्यपृष्ठे प्रासादोपरि स्थिताया इति शेषः तव सुललितगीतैः सुन्दरगानैः सुखेन व्रजतु गच्छतु मनोहरगीतेषु मनोनिवेशात् निदाघजन्यक्लेशो न भविष्यतीति निशायां सुललितगानैः निदाघमतिवाहय इति तात्पर्य्यार्थः ॥ २८ ॥

इति ऋतुसंहारव्याख्यायां ग्रीष्मवर्णनो नाम प्रथमः सर्गः।

---

सशीकरेति। हे प्रिये! शीकरः अम्बुकणः तत्सहितो यः अम्भोधरः मेघः सशीकराम्भोधरः स मत्तकुञ्जरः मत्तगज इव

समागतो राजवदुद्धतद्युतिः
घनागमः कामिजनप्रियः प्रिये ! ॥ १ ॥
नितान्तनीलोत्पलपत्रकान्तिभिः
क्वचित् प्रभिन्नाञ्जनराशिसन्निभैः।
क्वचित् सगर्भप्रमदास्तनप्रभैः
समाचितं व्योम घनैः समन्ततः ॥ २ ॥
तृषाकुलैश्चातकपक्षिणां कुलैः
प्रयाचितास्तोयभरावलम्बिनः।

यस्य सः अन्यत्र स इव मत्तकुञ्जरः यस्य सः तड़ित् विद्युत् पताका इव यस्य सः अन्यत्र तड़िदिव पताका यस्य सः अशनेः वज्रस्य शब्दः मर्दलः वाद्यविशेषशब्द इव यस्य सः अन्यत्र अशनिशब्द इव मर्दलः यस्य सः उद्धता उदिता द्युतिः कान्तिः शोभा वा यस्य तादृशः तथा कामिजनानां विलासिनां प्रियः उद्दीपकत्वादिति भावः अन्यत्र कामिजनानाम् अर्थिजनानां प्रियः प्रार्थनापूरकत्वादिति भावः घनागमः घनानां मेघानाम् आगमः यत्र तादृशः कालः वर्षाकाल इत्यर्थः राजवत् राजा इव समागतः उपस्थितः। सर्गेऽस्मिन्ना ऊनविंशात्, वंशस्थविलं वृत्तं तल्लक्षणन्तु पूर्वमुक्तमिति ॥ १ ॥

नितान्तेति। घनैः मेघैः क्वचित् नितान्तनीलानि यानि उत्पलानां कुवलयानां पत्राणि तेषां कान्तिरिव कान्तिर्येषां तैः क्वचित् प्रभिन्ना मर्दिता ये अञ्जनराशयः कज्जलस्तोमाः तेषां सन्निभाः सदृशाः तैः क्वचित् सगर्भा गर्भवती या प्रमदा तस्याः स्तनस्य प्रभा इव प्रभा येषां तादृशैः सद्भिः व्योम आकाशं समन्ततः चतसृषु दिक्षु समाचितं व्याप्तम् ॥ २ ॥

तृषाकुलैरिति। तृषाकुलैः पिपासार्त्तैः चातकपक्षिणां

प्रयान्ति मन्दं बहुधारवर्षिणो
बलाहकाः श्रोत्रमनोहरस्वनाः ॥ ३ ॥
बलाहकाश्चाशनिशब्दमर्दलाः
सुरेन्द्रचापं दधतस्तड़िद्गुणम् ।
सुतीक्ष्णधारापतनोग्रसायकै-
स्तुदन्ति चेतः प्रसभं प्रवासिनाम् ॥ ४ ॥
प्रभिन्नवैदूर्य्यनिभैस्तृणाङ्कुरैः
समाचिता प्रोत्थितकन्दलीदलैः ।

कुलैः समूहैः प्रयाचिताः जलं देहीति प्रार्थिताः, तोयभरेण जलभारेण अवलम्बन्ते अधोलम्बन्ते इति तथोक्ताः बलाहकाः मेघाः बहवः धारा यत्र तत् यथा तथा वर्षन्तीति तादृशाः तथा श्रोत्रे श्रवणे मनश्च हरतीति तादृशः स्वनः शब्दः गर्जनमिति यावत् येषां तथाभूताः सन्तः मन्दं शनैः शनैः प्रयान्ति समन्तात् सञ्चरन्ति ॥ ३ ॥

बलाहका इति। बलाहकाः मेघाः अशनिशब्द एव मर्दलः रणवाद्यध्वनिः येषां ते तथा तड़िदेव गुणः मौर्वी यस्य तत् सुरेन्द्रचापं शक्रधनुः दधतः धारयन्तः सन्तः सुतीक्ष्णानि यानि धारापतनानि तान्येव उग्राः सायकाः शराः तैः प्रवासिनां वियोगिनां चेतः चित्तं प्रसभं सहसा तुदन्ति मथ्नन्ति ॥ ४ ॥

प्रभिन्नेति। क्षितिः पृथिवी प्रभिन्नानि नवमेघशब्दात् प्रस्फुटितानि यानि वैदूर्य्याणि विदूरभूमिजरत्नानि, विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव इति कुमारसम्भवः। तन्निभैः तत्सदृशैस्तृणाङ्कुरैः तृणानाम् अङ्कुरैः प्ररोहैः प्रोत्थितानां नवजातानां कन्दलीनां लताविशेषाणां दलैः पत्रैः तथा इन्द्रगोपकैः घासविहारिभिः क्षुद्रकीटविशेषैः समाचिता सम्यक्

विभाति शुक्लेतररत्नभूषिता
वराङ्गनेव क्षितिरिन्द्रगोपकैः ॥ ५ ॥
सदा मनोज्ञं स्वनदुत्सवोत्सुकं
विकीर्णविस्तीर्णकलापशोभितम्।
ससम्भ्रमालिङ्गनचुम्बनाकुलं
प्रवृत्तनृत्यं कुलमद्य बर्हिणाम् ॥ ६ ॥
निपातयन्त्यः परितस्तटद्रुमान्
प्रवृद्धवेगैः सलिलैरनिर्मलैः।
स्त्रियः सुदुष्टा इव जातविभ्रमाः
प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥ ७ ॥

व्याप्ता, अतएव शुक्लेतरैः नीलरक्तादिभिः रत्नैः भूषिता अलङ्कृता वराङ्गना उत्कृष्टा कामिनीव विभाति शोभते ॥ ५ ॥

सदेति। अद्य इदानीं वर्षासु इत्यर्थः बर्हिणां मयूराणां कुलं वृन्दं सदा मनोज्ञं मनोहरं यथा तथा स्वनत् शब्दायमानम् उत्सवे आनन्दे उत्सुकं रतं, विकीर्णा इतस्ततो विक्षिप्ताः विस्तीर्णाः विस्तारं गताश्च ये कलापाः बर्हाः तैः शोभितं सञ्जातशोभं ससम्भ्रमं सवेगं यथा तथा आलिङ्गने चुम्बने च आकुलं व्यग्रं तथा प्रवृत्तं प्रारब्धं नृत्यं येन तत् ॥ ६ ॥

निपातयन्त्य इति। इदानीं नद्यः प्रवृद्धः वृद्धिं गतः वेगः येषां तादृशैः अनिर्मलैः कलुषैः सलिलैः परितः उभयतः तटद्रुमान् तीरजवृक्षान् निपातयन्त्यः प्रभ्रंशयन्त्यः अतएव जातः उत्पन्नः विभ्रमः शृङ्गारचेष्टाविशेषः यासां तादृश्यः सुदुष्टाः दोषवत्यः कुलटा इत्यर्थः स्त्रिय इव त्वरितं सत्वरं पयोनिधिं समुद्रम् अन्यत्र सङ्केतस्थं जारं प्रयान्ति गच्छन्ति कुलटाश्च स्वचारित्रेण पितृश्वशुरकुलजान् पातयन्तीति ध्वन्यते ॥ ७ ॥

तृणोत्करैरुद्गतकोमलाङ्कुरैः
विचित्रनीलैर्हरिणीमुखक्षतैः ।
वनानि वैन्ध्यानि हरन्ति मानसं
विभूषितान्युद्गतपल्लवद्रुमैः ॥ ८ ॥
विलोलनेत्रोत्पलशोभिताननैः
मृगैः समन्तादुपजातसाध्वसैः ।
समाचिता सैकतिनी वनस्थली
समुत्सुकत्वं प्रकरोति चेतसः ॥ ९ ॥
अभीक्ष्णमुच्चैर्ध्वनता पयोमुचा
घनान्धकारीकृतशर्वरीष्वपि ।

तृणोत्करैरिति। वैन्ध्यानि विन्ध्यगिरिजानि वनानि उद्गताः कोमला अङ्कुराः प्ररोहा येषां तैः विचित्राणि नीलानि तैः हरिणीनां मुखैः क्षतानि विदलितानि तैः तृणोत्करैः तृणसमूहैः तथा उद्गताः पल्लवा येषां तादृशा ये द्रुमाः तरवः तैः विभूषितानि विशेषेण शोभितानि सन्ति मानसं हरन्ति ॥८॥

विलोलेति। सैकतिनी सैकतं नद्यादीनां वालुकामयप्रदेशः तद्वती वनस्थली अरण्यभूमिः विचित्राणि नेत्राण्येव उत्पलानि कुवलयानि, तैः शोभितानि आननानि मुखानि येषां तादृशैः तथा उपजातम् उत्पन्नं साध्वसं भयं येषां तथाभूतैः मृगैः समन्तात् समाचिता व्याप्ता सती चेतसः मनसः समुत्सुकत्वं दर्शनकुतूहलित्वं प्रकरोति जनयति ॥ ९ ॥

अभीक्ष्णमिति। अभिसारिकाः कान्तार्थिन्यः कान्तार्थिनी तु या याति सङ्केतं साभिसारिका इत्यालङ्कारिकाः। स्त्रियः प्रमदाः अभीक्ष्णं मुहुर्मुहुः उच्चैः ध्वनता गर्ज्जता पयोमुचा

तड़ित्प्रभादर्शितमार्गभूमयः
प्रयान्ति रागादभिसारिकाः स्त्रियः ॥ १० ॥
पयोधरैर्भीमगभीरनिस्वनैः
तड़िद्भिरुद्वेजितचेतसो भृशम्।
कृतापराधानपि योषितः प्रियान्
परिष्वजन्ते शयने निरन्तरम् ॥ ११ ॥
विलोचनेन्दीवरवारिविन्दुभिः
निषिक्तविम्बाधरचारुपल्लवाः।

वारिदेन घना निविड़ा अन्धकारा यासु ताः घनान्धकाराः, अघनान्धकाराः घनान्धकाराः कृताः घनान्धकारीकृताः अभूततद्भावे च्विप्रत्ययः। तादृश्यः याः शर्वर्य्यः रात्रयः तासु अपि तड़ितां विद्युतां प्रभाभिः दर्शिता मार्गस्य भूमिः यासां ताः तथोक्ताः सत्यः रागात् सम्भोगाभिलाषात् कान्तानुरागाद्वा प्रयान्ति सङ्केतस्थानं गच्छन्ति ॥ १० ॥

पयोधरैरिति। योषितः नार्य्यः भीमा भयङ्कराः गभीराश्च निस्वना ध्वनयः येषां तैः पयोधरैः मेघैः तथा तड़िद्भिः भृशम् अत्यर्थम् उद्वेजितं चेतः येषां तादृश्यः भीषितचित्ता इत्यर्थः सत्यः शयने शय्यायां स्थितानिति शेषः कृतः अपराधः यैः तादृशान् अपि प्रियान् कान्तान् निरन्तरं गाढ़ं यथा तथा परिष्वजन्ते आलिङ्गन्ति मानिनीनामपि मानभङ्गकरोऽयं समय इति भावः ॥ ११ ॥

विलोचनेति। प्रवासिनां प्रोषितानां विदेशवासिनाम् इत्यर्थः प्रमदाः विलोचनानि नेत्राणि इन्दीवराणि नीलोत्पलानीव तेषां वारिविन्दुभिः अश्रुभिरित्यर्थः निषिक्ता अभिषिक्ता विम्बा इव अधराः चारवः मनोहराः पल्लवा इव यासां

निरस्तमाल्याभरणानुलेपनाः
स्थिता निराशाः प्रमदाः प्रवासिनाम्॥१२॥
विपाण्डुरं कीटरजस्तृणान्वितं
भुजङ्गवद्वक्रगतिप्रसर्पितम्।
ससाध्वसैर्भेककुलैर्निरीक्षितं
प्रयाति निम्नाभिमुखं नवोदकम्॥ १३ ॥
प्रफुल्लपत्रां नलिनीं समुत्सुकां
विहाय भृङ्गाः श्रुतिहारिनिस्वनाः।
पतन्ति मूढाः शिखिनां प्रनृत्यतां
कलापचक्रेषु नवोत्पलाऽऽशया॥ १४ ॥

तादृश्यः निरस्तानि त्यक्तानि माल्यानि आभरणानि अनुलेपनानि च याभिः तथाभूताः तथा नास्ति आशा जीवनाभिलाषः यासां तथोक्ताः सत्यः स्थिताः। वर्षासु विरहोऽतीव-दुःसह इति भावः॥ १२॥

विपाण्डुरमिति। नवोदकं नूतनजलं विपाण्डुरं विशेषेण पाण्डुवर्णं कलुषमित्यर्थः कीटैः रजोभिः तृणैश्च अन्वितं युक्तं भुजङ्गवत् पन्नग इव वक्रा गतिर्यस्य तत् प्रसर्पितं इतस्ततः गच्छत् तथा ससाध्वसैः सभयैः भेककुलैः मण्डूकवृन्दैः निरीक्षितं दृष्टं सत् निम्नम् अभिमुखं यस्मिन् तत् यथा तथा प्रयाति गच्छति॥ १३॥

प्रफुल्लपत्रमिति। मूढाः विवेकरहिताः श्रुतिहारी श्रोत्र-सुखः निस्वनः ध्वनिर्येषां तादृशाः भृङ्गाः प्रफुल्लानि पत्राणि यस्याः तां समुत्सुकां मधुदानोद्यतामिति यावत् नलिनीं पद्मिनीं विहाय त्यक्त्वा नवम् उत्पलं कुवलयं तस्य आशया

वनद्विपानां नववारिदस्वनैः
मदान्वितानां ध्वनतां मुहुर्मुहुः।
कपोलदेशा विमलोत्पलप्रभाः
सभृङ्गयूथैर्मदवारिभिश्चिताः॥ १५॥
सतोयनम्राम्बुदचुम्बितोपलाः
समाचिताः प्रस्रवणैः समन्ततः।
प्रवृत्तनृत्यैः शिखिभिः समाकुलाः
समुत्सुकत्वं जनयन्ति भूधराः॥ १६॥
कदम्बसर्जार्जुननीपकेतकी:

आकाङ्क्षया प्रनृत्यतां प्रकर्षेण नृत्यं कुर्वतां शिखिनां मयूराणां कलापचक्रेषु वर्हमण्डलेषु पतन्ति अत्र प्रकृतयोर्नलिनीभृङ्गयोः स्वकान्ताधृष्टनायकयोर्व्यवहारसमारोपात् समासोक्तिरलङ्कारः। तदुक्तं दर्पणकारैः, समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति॥ १४॥

वनद्विपानामिति। नवानां वारिदानां मेघानां स्वनैः ध्वनिभिः मदान्वितानां मत्तानाम् अतएव मुहुर्मुहुः ध्वनतां वृंहतां वनद्विपानाम् आरण्यगजानां विमलानि निर्मलानि यानि उत्पलानि कुवलयानि तेषां प्रभा इव प्रभा येषां तादृशाः कपोलदेशाः गण्डप्रदेशाः सभृङ्गयूथैः भ्रमरवृन्दसहितैः मदवारिभिः मदजलैः चिताः व्याप्ताः॥ १५॥

सतोयेति। भूधराः पर्वताः सतोयैः सजलैः अतएव नम्रैः जलभरनतैरित्यर्थः अम्बुदैः मेघैः चुम्बितानि स्पृष्टानि उपलानि ऊर्द्धतनशिला येषां तादृशाः, समन्ततः चतुर्दिक्षु प्रस्रवणैः निर्झरैः समाचिताः सम्यक् व्याप्ताः तथा प्रवृत्तं प्रारब्धं नृत्यं येषां तथाभूताः सन्तः समुत्सुकत्वं दर्शनकुतूहलित्वं जनयन्ति१६

प्रकम्पयंस्तत्कुसुमाधिवासितः।
सशीकराम्भोधरसङ्गशीतलः
समीरणः कं न करोति सोत्सुकम् ॥ १७ ॥
शिरोरुहैः श्रोणितटावलम्बिभिः
कृतावतंसैः कुसुमैः सुगन्धिभिः।
स्तनैः सहारैर्वदनैः ससीधुभिः
स्त्रियो रतिं संजनयन्ति कामिनाम् ॥१८॥
तड़िल्लताशक्रधनुर्विभूषिताः
पयोधरास्तोयभरावलम्बिनः।
स्त्रियश्च काञ्चीमणिकुण्डलोज्ज्वला
हरन्ति चेतो युगपत् प्रवासिनाम् ॥ १९ ॥

कदम्बेति। समीरणः वायुः कदम्बसर्जार्जुननीपकेतकीः तत्तन्नामकान् वृक्षान् प्रकम्पयन् अतएव तासां कुसुमैः अधिवासितः सुरभीकृतः तथा सशीकराणां सजलकणानाम् अम्भोधराणां मेघानां सङ्गेन संसर्गेण शीतलः सन् कं जनं सोत्सुकं सानन्दं प्रवासादुत्कण्ठितं वा न करोति अपितु सर्वमेव जनं सोत्सुकं करोतीत्यर्थः ॥ १७ ॥

शिरोरुहैरिति। स्त्रियः कामिन्यः श्रोणितटावलम्बिभिः नितम्बदेशलम्बमानैः शिरोरुहैः केशैः कृतावतंसैः कर्णभूषणीकृतैः सुगन्धिभिः कुसुमैः सहारैः हारशोभितैः स्तनैः तथा ससीधुभिः सासवैः मदगन्धिभिरित्यर्थः वदनैः मुखैः कामिनां विलासिनां रतिम् अनुरागं सञ्जनयन्ति वर्द्धयन्तीत्यर्थः ॥ १८ ॥

तड़िदिति। तड़ितः लता इव ताभिः तथा शक्रधनुर्भिः विभूषिताः अलङ्कृताः तोयभरेण अवलम्बन्ते इति तथोक्ताः

मालाः कदम्बनवकेशरकेतकीभिः
आयोजिताः शिरसि बिभ्रति योषितोऽद्य।
कर्णान्तरेषु ककुभद्रुममञ्जरीभिः
इच्छानुकूलं रचितानवतंसकांश्च ॥ २० ॥
कालागुरुप्रचुरचन्दनचर्चिताङ्गाः
पुष्पावतंससुरभीकृतकेशपाशाः।
श्रुत्वा ध्वनिं जलमुचां त्वरितं प्रदोषे
शय्यागृहं गुरुगृहात् प्रविशन्ति नार्य्यः ॥२१॥

पयोधराः मेघाः, काञ्ची रशना मणिकुण्डले रत्नकर्णाभरणे तैः उज्ज्वलाः शोभिताः रशनाकुण्डलधारिण्य इत्यर्थः स्त्रियः प्रमदाश्च युगपद् सममेव प्रवासिनां विरहिणामित्यर्थः चेतः मनः हरन्ति व्याकुलीकुर्वन्तीत्यर्थः ॥ १९ ॥

माला इति। अद्य इदानीं वर्षासु इत्यर्थः योषितः नार्य्यः कदम्बपुष्पैः नवकेशरकुसुमैः केतकीपुष्पैश्च आयोजिताः विरचिताः मालाः शिरसि, तथा ककुभद्रुमाणाम् अर्जुनतरूणां मञ्जरीभिः इच्छया अनुकूलम् अभिलाषानुरूपं यथा तथा रचितान् अवतंसकान् कर्णभूषणानि च कर्णान्तरेषु श्रोत्रप्रदेशेषु बिभ्रति धारयन्ति अत्र वसन्ततिलकं वृत्तं ज्ञेयं वसन्ततिलकं तभजा जगौग इति लक्षणात् ॥ २० ॥

कालेति। कालागुरुः कृष्णागुरुः गन्धद्रव्यविशेषः तेन प्रचुरं बहुतरं यत् चन्दनं कालागुरुमिश्रणात् समधिकं चन्दनमित्यर्थः तेन चर्चितानि अनुलिप्तानि अङ्गानि याभिः ताः तथा पुष्पावतंसेन पुष्परचितकर्णभूषणेन सुरभीकृताः केशपाशाः याभिः तादृश्यः नार्य्यः प्रदोषे रजनीमुखे जलमुचां वारिदानां

कुवलयदलनीलैरुन्नतैस्तोयनम्नैः
मृदुपवनविधूतैर्मन्दमन्दं चलद्भिः।
अपहृतमिव चेतस्तोयदैः सेन्द्रचापैः
पथिकजनवधूनां तद्वियोगाकुलानाम्॥२२॥

मुदित इव कदम्बैर्जातपुष्पैः समन्तात्
पवनचलितशाखैः शाखिभिर्नृत्यतीव।
हसितमिव विधत्ते सूचिभिः केतकीनां
नवसलिलनिषेकाच्छिन्नतापो वनान्तः॥२३॥

ध्वनिं श्रुत्वा गुरुगृहात् श्वशुरभवनात् त्वरितं शीघ्रं शय्यागृहं निजशयनागारं प्रविशन्ति। अत्रापि वसन्ततिलकं वृत्तम्॥२१॥

कुवलयेति। कुवलयानां नीलोत्पलानां दलवत् नीलाः नील-वर्णाः तैः उन्नतैः विशालैः वृहद्भिरित्यर्थः तोयनम्रैः जलभारन-मितैः, मृदुना पवनेन विधूतैः चालितैः अतएव मन्दं मन्दं शनैः शनैः चलद्भिः सेन्द्रचापैः शक्रधनुर्भूषितैः इत्यर्थः तोयदैः मेघैः तेषां पथिकजनानां वियोगेन आकुलानां पथिकजनवधूनां विरहिणीनाम् इत्यर्थः चेतः चित्तम् अपहृतमिव तादृशमेघदर्श-नेन तासां चित्तस्य स्वशरीरं परित्यज्य स्वाभीष्टजनसन्निधौ गमनात् चोरितमिवेत्युत्प्रेक्षा। इत आरभ्य आसर्गसमाप्तेः मालिनीवृत्तं तल्लक्षणन्तु उक्तं प्राक्॥ २२॥

मुदित इति। नवानां सलिलानां निषेकात् छिन्नः नाशितः तापः यस्य तादृशः वनान्तः वनप्रदेशः समन्तात् सर्वतः जातानि पुष्पाणि येषां तैः कदम्बैः तदाख्यतरुभिः मुदित इव हर्षात् रोमाञ्चित इव पवनेन चलिताः शाखा येषां तथोक्तैः शाखिभिः वृक्षैः करणभूतैः नृत्यतीव तथा केतकीनां सूचिभिः अग्रभागैः करणभूतैः हसितमिव हास्यमिव विधत्ते हसतीवेत्यर्थः॥२३॥

शिरसि वकुलमालां मालतीभिः समेतां
विकसितवनपुष्पैर्यूथिकाकुट्मलैश्च ।
विकचनवकदम्बैः कर्णपूरं बधूनां
रचयति जलदौघः कान्तवत् काल एषः ॥२४॥
दधति कुचयुगाग्रैरुन्नतैर्हारयष्टिं
प्रतनुसितदुकूलान्यायतैः श्रोणिबिम्बैः ।
नवजलकणसेकादुद्गतां रोमराजीं
ललितवलिविभागैर्मध्यदेशैश्च नार्य्यः॥ २५ ॥
नवजलकणसङ्गाच्छीततामादधानः
कुसुमभरनतानां नाशकः पादपानाम् ।

शिरसीति । जलदानाम् ओघः समूहः यत्र सः एषः कालः कान्तवत् प्रिय इव बधूनां कामिनीनां शिरसि मालतीभिः विकसितवनपुष्पैः यूथिकानां कुड्मलैः मुकुलैश्च समेतां संयुक्तां वकुलमालां तथा विकचानि प्रस्फुटितानि यानि नवानि कदम्बानि तैः कर्णपूरं कर्णभूषणं रचयति अस्मिन् काले हि कामिन्यः शिरसि विविधवार्षिककुसुमविरचितां मालां तथा कर्णयोः विकसितकदम्बकुसुमे धारयन्ति इति भावः ॥२४॥

दधतीति। इह समये नार्य्यः उन्नतैः कुचयुगाग्रैः स्तन-युगलाग्रभागैः हारयष्टिम् आयतैःविशालैः श्रोणिबिम्बैः नितम्ब-देशैः प्रतनूनि सूक्ष्माणि सितानि शुभ्राणि अमलिनानि इत्यर्थः दुकूलानि वसनानि तथा ललिता मनोहराः बलीनां त्रयाणाम् इति शेषः विभागाः येषु तादृशैः मध्यदेशैः जघनप्रदेशैः इत्यर्थः नवानां जलानां सेकात् आर्द्रीकरणात् उद्गतां सञ्जातां रोम-राजीं लोमावलीं दधति बिभ्रति ॥ २५ ॥

जनितरुचिरगन्धः केतकीनां रजोभिः
अपहरति नभस्वान् प्रोषितानां मनांसि ॥ २६ ॥
जलभरनमितानामाश्रयोऽस्माकमुच्चैः
अयमिति जलसेकैस्तोयदा स्तोयनम्राः ।
अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभिः
समुपजनिततापं ह्लादयन्तीव विन्ध्यम् ॥ २७ ॥
बहुगुणरमणीयो योषितां चित्तहारी
तरुविटपलतानां बान्धवो निर्विकारः ।

नवेति। इह समये नवानां जलकणानां सङ्गात् शीततां शैत्यम् आदधानः शीतल इत्यर्थः कुसुमानां भरेण नतानाम् असाराणाम् इति भावः पादपानां वृक्षाणां नाशकः उत्पाटकः (एतेन अस्य मान्द्यं व्यज्यते) तथा केतकीनां रजोभिः परागैः जनितः उत्पादितः रुचिरः मनोज्ञः गन्धो यस्य तादृशः नभस्वान् वायुः प्रोषितानां प्रवासिनां विरहिणाम् इत्यर्थः मनांसि अपहरति उत्सुकानि करोति इत्यर्थः ॥ २६ ॥

जलेति। तोयनम्राः तोयभरावलम्बिनः तोयदाः मेघाः अयं विन्ध्यगिरिः जलभरनमितानां पतताम् इति भावः अस्माकं उच्चैः महान् आश्रय इति हेतोः जलसेकैः सलिलवर्षणैः करणभूतैः अतिशयपरुषाभिः अत्युग्राभिः ग्रीष्मवह्नेः निदाघानलस्य शिखाभिः समुपजनितः समुत्पादितः तापः यस्य तादृशं विन्ध्यं ह्लादयन्ति इव तापोपशमनेन हर्षयन्तीव॥२७॥

बहु इति। हे प्रिये इति सर्वत्र अध्याहार्य्यम्। हे प्रिये! बहुभिः गुणैः रमणीयः, योषितां कामिनीनां चित्तहारी मनोहारी सुखसम्भोगोद्दीपनात् इति भावः, तरूणां विटपानां

जलदसमय एषः प्राणिनां प्राणभूतो
दिशतु तव हितानि प्रायशो वाञ्छितानि ॥२८॥

इति श्रीकालिदासकविवराग्रणीविरचिते ऋतु-
संहारे प्रावृड्वर्णनं नाम द्वितीयः सर्गः।

---

## शरद्वर्णनम्।

### तृतीयः सर्गः।

काशांशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहंसरवनूपुरनादरम्या।
आपक्वशालिरुचिरा तनुगात्रयष्टिः
प्राप्ता शरन्नववधूरिव रूपरम्या ॥ १ ॥

शाखानां लतानाञ्च निर्विकारः अकपटः बान्धवः पुष्टिसम्पादनात् इति भावः तथा प्राणिनां देहिनां प्राणभूतः जीवनस्वरूपः शस्यजननात् इति भावः एष जलदसमयः वर्षर्त्तुः प्रायशः बाहुल्येन तव वाञ्छितानि इष्टानि हितानि दिशतु विदधातु ॥ २८ ॥

इति ऋतुसंहारव्याख्यायां वर्षावर्णनं नाम द्वितीयः सर्गः।

---

काशांशुकेति। काशा अंशुकानि इव यस्याः सा अन्यत्र काशा इव अंशुकानि वस्त्राणि यस्याः सा विकचं विकसितं पद्मं मनोज्ञं मनोहरं वक्त्रं मुखमिव यस्याः सा अन्यत्र विकचमिव मनोज्ञवक्त्रं यस्याः सा, सोन्मादानां उन्मत्तानां हंसानां रवाः शब्दाः नूपुरनादा इव तैः रम्या, अन्यत्र सोन्मादहंसानां

काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि सरितां कुमुदैः सरांसि।
सप्तच्छदैः कुसुमभारनतैर्वनान्ताः
शुक्लीकृतान्युपवनानि च मालतीभिः॥ २॥
चञ्चन्मनोज्ञशफरीरशनाकलापाः
पर्य्यन्तसंस्थितसिताण्डजपङ्क्तिहाराः।

रवा इव नूपुरनादाः तैः रम्या, आ समन्तात् पक्का परिणता शालिः धान्यलता रुचिरा सुन्दरी तन्वी गात्रयष्टिः इव यस्याः सा अन्यत्र आपक्कशालिः इव रुचिरा तन्वी गात्रयष्टिः यस्याः तथाभूता शरत् तृतीयर्त्तुः रूपेण रम्या अतिरूपवती नवबधूः नवा कामिनीव प्राप्ता उपस्थिता। अत्र आविंशात्, वसन्ततिलकं वृत्तं तल्लक्षणन्तु उक्तं प्राक्॥ १॥

काशैरिति। (अस्मिन् समये) काशैः काशकुसुमैः मही पृथिवी, शिशिरदीधितिना चन्द्रेण रजन्यः रात्रयः हंसैः सरितां जलानि, कुमुदैः सरांसि, कुसुमभारनतैः पुष्पितैः इत्यर्थः सप्तच्छदैः तदाख्यवृक्षभेदैः वनान्ताः अरण्यप्रदेशाः, मालतीभिः उपवनानि उद्यानानि च शुक्लीकृतानि अशुक्लानि शुक्लानि कृतानि इति अभूततद्भावे च्विप्रत्ययः। यथायथं लिङ्गवचनव्यत्ययं कृत्वा अन्वयः कर्त्तव्यः॥ २॥

चञ्चदिति। अद्य अस्मिन् समये चञ्चन्त्यः चपलाः मनोज्ञाः शफर्य्यः रसनाकलापाः काञ्चीगुणाः यासां ताः अन्यत्र चञ्चन्त्यः मनोज्ञाः शफर्य्य इव रशनाकलापा यासां ताः पर्य्यन्तेषु प्रान्तदेशेषु अन्यत्र कण्ठदेशेषु संस्थिताः विचरन्त्यः सिताः शुभ्राः अण्डजानां पक्षिणां हंसानाम् इत्यर्थः पङ्क्तयः हारा इव यासां

नद्यो विशालपुलिनान्तनितम्बविम्बा
मन्दं प्रयान्ति समदा: प्रमदा इवाद्य ॥३॥
व्योम क्वचिद्रजतशङ्खमृणालगौरैः
त्यक्ताम्बुभिर्लघुतया शतशः प्रयातैः।
संलक्ष्यते पवनवेगचलैः पयोदैः
राजेव चामरवरैरुपवीज्यमानः ॥ ४ ॥
भिन्नाञ्जनप्रचयकान्ति नभो मनोज्ञं
बन्धूकपुष्परचितारुणता च भूमिः।

ताः अन्यत्र संस्थिताः सिताः अब्जजानां पङ्क्तय इव हारा यासां ताः, तथा विशालाः महान्तः पुलिनान्ताः सैकतप्रदेशाः नितम्बविम्बानि कटिपश्चाद्भागा इव यासां ताः अन्यत्र विशाल-पुलिनान्ता इव नितम्बविम्बानि यासां ताः नद्यः समदाः पीत-मद्याः प्रमदाः कामिन्य इव मन्दं मन्थरं यथा तथा प्रयान्ति गच्छन्ति वर्षापगमेन क्रमशो जलह्रासादिति भावः ॥ ३ ॥

व्योमेति। क्वचित् व्योम आकाशं रजतानि रौप्याणि शङ्खाः मृणालानि रजतशङ्खमृणालानि तद्वत् गौराः शुभ्राः तैः, त्यक्तानि अम्बूनि जलानि यैः अतएव लघुतया भारापगमेन इत्यर्थः शतशः खण्डशः प्रयातैः गच्छद्भिः तथा पवनस्य वायोः वेगेन चलाः तैः पयोदैः मेघैः चामरवरैः उत्कृष्टचामरैः उप-वीज्यमानः राजा इव संलक्ष्यते दृश्यते। अत्र उपमालङ्कारः। तदुक्तं दर्पणकारेण, साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोः इति ॥ ४ ॥

भिन्नेति। भिन्नः मर्दितः यः अञ्जनप्रचयः कज्जलस्तोमः तस्य कान्तिरिव कान्तिर्यस्य तत् अतएव मनोज्ञं मनोहरं नभः आकाशं, बन्धूकपुष्पैः रक्तवर्णपुष्पविशेषैः रचिता कृता अरु-

वप्राश्च चारुकमलावृतभूमिभागाः
प्रोत्कण्ठयन्ति न मनो भुवि कस्य यूनः ? ॥५॥
मन्दानिलाकुलितचारुतराग्रशाखः
पुष्पोद्गमप्रचयकोमलपल्लवाग्रः।
मत्तद्विरेफपरिपीतमधुप्रसेकः
चित्तं विदारयति कस्य न कोविदारः ? ॥६॥
तारागणप्रचुरभूषणमुद्वहन्ती
मेघावरोधपरिमुक्तशशाङ्कवक्त्रा।

णता रक्तवर्णता यस्याः सा बन्धूकपुष्पेण रक्तवर्णा इत्यर्थः भूमिः तथा चारुभिः मनोज्ञैः कमलैः आवृताः पूरिता भूमिभागा येषां तादृशाः वप्राः चयप्रदेशाः। स्याच्चयो वप्रमस्त्रियाम् इत्यमरः। पक्वकलमावृतेति पाठे पक्वैः कलमैः धान्यैः आवृता व्याप्ता भूमिभागाः येषां तादृशा वप्राः क्षेत्राणि इत्यर्थः भुवि पृथिव्यां कस्य यूनः तरुणस्य मनः न प्रोत्कण्ठयन्ति ? न हरन्ति ? अपितु सर्वस्य एवेत्यर्थः ॥ ५ ॥

मन्देति। मन्देन अनिलेन आकुलिता चञ्चलिता अतएव चारुतरा अतिमनोहरा अग्रशाखा शाखाग्रं यस्य सः पुष्पोद्गमानां प्रचयेन अतिरेकेण कोमलानि मृदुलानि अल्पानि इत्यर्थः पल्लवाग्राणि अग्रपल्लवा यस्य तथोक्तः पुष्पितावस्थायां पल्लवह्रासात् इति भावः तथा मत्तैः द्विरेफैः भ्रमरैः परिपीतः मधुप्रसेकः मकरन्दनिस्रवः यस्य तादृशः कोविदारः रक्तकाञ्चनारवृक्षः कस्य जनस्य मनः न विदारयति ? हरति अपितु सर्वस्य एवेत्यर्थः ॥ ६ ॥

तारेति। रजनी तारागणः नक्षत्रगणः प्रचुरं यथेष्टं भूषणमिव तत् अन्यत्र तारागण इव प्रचुरभूषणं तत् उद्वहन्ती

ज्योत्स्नादुकूलममलं रजनी दधाना
वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला ॥ ७ ॥
कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसकुलाकुलतीरदेशाः ।
कुर्वन्ति हंसविरुतैः परितो जनस्य
प्रीतिं परां कमलरेणुवृतास्तटिन्यः ॥ ८ ॥
नेत्रोत्सवो हृदयहारिमरीचिमालः
प्रह्लादकः शिशिरशीकरवारिवर्षी ।

दधती मेघावरोधेन परिमुक्तं परित्यक्तं शशाङ्कः वक्त्रं मुखमिव यस्याः सा अन्यत्र तादृशः शशाङ्क इव वक्त्रं यस्याः सा तथा अमलं निर्मलं ज्योत्स्ना दुकूलमिव तत् अन्यत्र ज्योत्स्नेव दुकूलं वसनं दधाना रजनी शारदी रात्रिः बाला प्रमदा इव अनुदिनं प्रतिदिनं वृद्धिं प्रयाति गच्छति आश्विनस्य एकादश-दिनात् रात्रिमानवृद्धेः इति भावः ॥ ७ ॥

कारण्डवेति। (अस्मिन् समये) तटिन्यः नद्यः कारण्डवानां जलचरपक्षिविशेषाणाम् आननैः मुखैः विघट्टिताः खण्डिताः वीचीनां तरङ्गाणां मालाः श्रेणयः यासां ताः, कादम्बानां कलहंसानां सारसानाञ्च कुलैः आकुला व्याप्ता तीरदेशाः तट-भूमयः यासां तथोक्ताः तथा कमलानां पद्मानां रेणुभिः परागैः वृताः पूरिताः सत्यः परितः समन्तात् हंसानां विरुतैः शब्दितैः जनस्य परां महतीं प्रीतिम् आनन्दं कुर्वन्ति जनयन्तीत्यर्थः ॥८॥

नेत्रोत्सव इति। नेत्राणाम् उत्सवः आनन्दः यस्मात् सः नयनानन्दकर इत्यर्थः, हृदयहारिणी मनोहारिणी मरीचीनां माला यस्य तथोक्तः प्रह्लादयतीति प्रह्लादकः मनःप्रीतिजनन

पत्युर्वियोगविषदिग्धशरक्षतानां
चन्द्रो दहत्यतितरां तनुमङ्गनानाम् ॥ ९ ॥
आकम्पयन् फलभरानतशालिजालान्
आनर्त्तयन् कुरुवकान् कुसुमावनम्रान् ।
प्रोत्फुल्लपङ्कजवनां नलिनीं विधुन्वन्
यूनां मनश्चलयति प्रसभं नभस्वान् ॥ ॥१०॥
सोन्मादहंसमिथुनैरुपशोभितानि
स्वच्छानि फुल्लकमलोत्पलभूषितानि ।

इत्यर्थः तथा शिशिराणां तुषाराणां शीकरा विन्दव एव वारीणि शिशिरशीकरवारीणि तानि वर्षतीति तथाभूतः चन्द्रः पत्युः वियोग एव विषदिग्धः विषाक्तः शरः तेन क्षतानाम् आहतानां विरहिणीनाम् इत्यर्थः अङ्गनानां कामिनीनां तनुं शरीरम् अतितराम् अतिमात्रं दहति इदानीं चन्द्रस्यातीवोद्दीपकत्वात् तदसह्यता विरहिणीनाम् इति भावः ॥ ९ ॥

आकम्पयन्निति। (अस्मिन् समये) नभस्वान् समीरणः फलानां भरेण आनता शालीनां जालाः समूहाः तान् आकम्पयन् चपलयन्, कुसुमावनम्रान् पुष्पभारनमितान् कुरुवकान् तरुविशेषान् आनर्त्तयन् चञ्चलयन् तथा प्रोत्फुल्लानि पङ्कजानां पद्मानां वनानि यस्यां तादृशीं नलिनीं पद्मिनीं विधुन्वन् कम्पयन् सन् यूनां तरुणानां मनः प्रसभं झटिति चलयति चञ्चलं करोति आनन्दयति इत्यर्थः ॥ १० ॥

सोन्मादेति। (अस्मिन् समये) सरांसि सोन्मादानि मत्तानि हंसानां मिथुनानि युग्मानि स्त्रीपुंसो मिथुनं युग्ममित्यमरः तैः उपशोभितानि, स्वच्छानि निर्मलानि फुल्लैः विकसितैः

मन्दप्रभातपवनोद्गतवीचिमाला-
न्युत्कण्ठयन्ति सहसा हृदयं सरांसि ॥ ११ ॥
नष्टं धनुर्बलभिदो जलदोदरेषु
सौदामिनी स्फुरति नाद्य वियत्पताका।
धुन्वन्ति पक्षपवनैर्न नभो बलाकाः
पश्यन्ति नोन्नतमुखा गगनं मयूराः ॥ १२ ॥
नृत्यप्रयोगरहितान् शिखिनो विहाय
हंसानुपैति मदनो मधुरप्रगीतान्।
मुक्त्वा कदम्बकुटजार्जुनसर्जनीपान्
सप्तच्छदानुपगता कुसुमोद्गमश्रीः ॥ १३ ॥

कमलैः उत्पलैश्च भूषितानि तथा मन्दः धीरः यः प्रभातपवनः तेन उद्गता वीचिमाला तरङ्गपङ्क्तिर्येषां तथाभूतानि सन्ति सहसा हृदयं जनानाम् इति शेषः उत्कण्ठयन्ति उदासयन्ति इत्यर्थः ॥ ११ ॥

नष्टमिति। अद्य इदानीं बलभिदः इन्द्रस्य धनुः जलदोदरेषु मेघाभ्यन्तरेषु नष्टं लीनं, वियतः आकाशस्य पताका सौदामिनी न स्फुरति न विकाशते बलाकाः वकश्रेणयः पक्षपवनैः पक्षवातैः नभः आकाशं न धुन्वन्ति कम्पयन्ति तथा मयूराः उन्नतमुखाः ऊर्द्ध्वमुखाः सन्तः गगनं न पश्यन्ति वर्षासु एव एषां प्रादुर्भावादिति भावः ॥ १२ ॥

नृत्येति। (अस्मिन् समये) मदनः कामः नृत्यप्रयोगरहितान् नर्त्तनव्यापारशून्यान् शिखिनः मयूरान् विहाय त्यक्त्वा मधुरं प्रगीतं प्रकृष्टं गानं येषां तान् हंसान् उपैति गच्छति। तथा कुसुमानाम् उद्गमश्रीः उदयलक्ष्मीः कदम्बं कुटजम् अर्जुनं

शेफालिकाकुसुमरागमनोहराणि
स्वस्थस्थिताण्डजगणप्रतिनादितानि।
पर्य्यन्तसंस्थितमृगीनयनोत्पलानि
प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ॥१४॥
कह्लारपद्मकुमुदानि मुहुर्विधुन्वन्
तत्सङ्गमादधिकशीतलतामुपेतः।
उत्कण्ठयत्यतितरां पवनः प्रभाते
पत्रान्तलग्नतुहिनाम्बुविधूयमानः ॥ १५ ॥

सर्जं नीपञ्च मुक्त्वा परित्यज्य सप्तच्छदान् तदाख्यवृक्षान् उपगता आश्रिता समय एव करोति बलाबलम् इति भावः ॥१३॥

शेफालिकेति। (अस्मिन् समये) उपवनानि शेफालिकाकुसुमानां रागेण विकासेन मनोहराणि, स्वस्थं वर्षातपापगमात् निरुद्वेगं यथा तथा स्थितैः अण्डजानां पक्षिणां गणैः प्रतिनादितानि शब्दितानि तथा पर्य्यन्तेषु प्रान्तदेशेषु संस्थितानां चरन्तीनां मृगीणां नयनानि एव उत्पलानि येषु तथाभूतानि सन्ति पुंसां मनांसि प्रोत्कण्ठयन्ति उल्लासयन्ति ॥ १४ ॥

कह्लारेति। (अस्मिन् समये) प्रभाते प्रातःकाले कह्लाराणि रक्तोत्पलानि पद्मानि कुमुदानि च मुहुः पुनः पुनः विधुन्वन् कम्पयन् अतएव तेषां कह्लारादीनां सङ्गमात् संसर्गात् अधिकशीतलताम् अतिशैत्यम् उपेतः प्राप्तः तथा तरूणां पत्राणाम् अन्तेषु लग्नानि यानि तुहिनानि शिशिराणि तानि हरन् वहन् पवनः अतितराम् अत्यन्तम् उत्कण्ठयति प्रीणयति इत्यर्थः ॥ १५ ॥

सम्पन्नशालिनिचयावृतभूतलानि
सुस्थस्थितप्रचुरगोकुलशोभितानि ।
हंसैश्च सारसकुलैः प्रतिनादितानि
सीमान्तराणि जनयन्ति जनप्रमोदम् ॥ १६ ॥
हंसैर्जिता सुललिता गतिरङ्गनानाम्
अम्भोरुहैर्विकसितैर्मुखचन्द्रकान्तिः ।
नीलोत्पलैर्मदकलानि विलोकितानि
भ्रूविभ्रमाश्च रुचिरास्तनुभिस्तरङ्गैः ॥ १७ ॥
श्यामालताः कुसुमभारनतप्रबालाः
स्त्रीणां हरन्ति धृतभूषणबाहुकान्तिम् ।

सम्पन्नेति । ( अस्मिन् समये ) सीमान्तराणि जनस्थान-सीमाप्रदेशाः सम्पन्नैः पूर्णतां गतैः शालीनां धान्यानां निचयैः आवृतानि व्याप्तानि भूतलानि क्षेत्राणि येषां तानि सुस्थम् अनुद्वेगं वर्षातपविरहात् इति भावः यथा तथा स्थितैः प्रचुरैः बहुभिः गवां कुलैः शोभितानि तथा हंसैः सारस-कुलैश्च प्रतिनादितानि सन्ति जनानां प्रमोदम् आनन्दं जन-यन्ति ॥ १६ ॥

हंसैरिति । ( अस्मिन् समये ) हंसैः अङ्गनानां प्रमदानां सुललिता मन्दमनोहरा गतिः गमनं विकसितैः अम्भोरुहैः पद्मैः मुखचन्द्रस्य कान्तिः नीलोत्पलैः मदकलानि मदेन कलानि चञ्चलानि विलोकितानि कटाक्षपाता इत्यर्थः तथा तनुभिः अल्पाल्पैः तरङ्गैः रुचिराः मनोज्ञाः भ्रूविभ्रमाः भ्रुवो-र्विभ्रमा भङ्गिविशेषाः सर्वत्र यथायथं लिङ्गवचनव्यत्ययेन जिता इत्यनेन अन्वयः ॥ १७ ॥

ओष्ठावभासविशदस्मितचन्द्रकान्तिं
कङ्केलिपुष्परुचिरा नवमालिकाश्च ॥ १८ ॥
केशान्नितान्तघननीलविकुञ्चिताग्रान्
आपूरयन्ति वनिता नवमालतीभिः।
कर्णेषु च प्रवरकाञ्चनकुण्डलेषु
नीलोत्पलानि विविधानि निवेशयन्ति ॥१९॥
हारैः सचन्दनरसैः स्तनमण्डलानि
श्रोणीतटं सुविपुलं रशनाकलापैः।

श्यामा इति। (अस्मिन् समये) कुसुमभारेण नताः प्रबालाः पल्लवाः यासां ताः श्यामाः श्यामवर्णा लताः स्त्रीणां धृतानि भूषणानि येषु तेषां बाहूनां कान्तिं शोभां तथा कङ्केलिपुष्पम् अशोकपुष्पं तेन रुचिराः तत्सहिता इत्यर्थः नवमालिकाश्च (दन्तावभासेत्यपपाठः) ओष्ठस्य अवभासः दीप्तिर्यस्मिन् तादृशं यद् विशदं निर्मलं स्मितं तदेव चन्द्रकान्तिः तां हरन्ति श्यामा-लताः स्त्रीणां भूषितबाहुवत् तथा अशोकपुष्पसहिता नव-मालिकाः ओष्ठावभाससहितस्मितवत् शोभन्ते इति सर-लार्थः ॥ १८ ॥

केशानिति। (अस्मिन् समये) वनिताः योषितः नितान्त-घनाः अतिसान्द्राः नीलाः विकुञ्चितानि कुटिलानि अग्राणि येषां ते विकुञ्चिताग्राः तान् केशान् नवमालतीभिः तदाख्य-कुसुमैः आपूरयन्ति भूषयन्ति, तथा प्रवराणि उत्कृष्टानि काञ्चनकुण्डलानि येषु तथोक्तेषु कर्णेषु विविधानि विचित्राणि नीलोत्पलानि निवेशयन्ति अर्पयन्ति ॥ १९ ॥

हारैरिति। (अद्य अस्मिन् समये) नार्यः प्रहृष्टमनसः

पादाम्बुजानि कलनूपुरशेखरैश्च
नार्य्यः प्रहृष्टमनसोऽद्य विभूषयन्ति ॥ २० ॥
स्फुटकुमुदचितानां राजहंसस्थितानां
मरकतमणिभासा वारिणा भूषितानाम्।
श्रियमतिशयरूपां व्योम तोयाशयानां
वहति विगतमेघं चन्द्रतारावकीर्णम् ॥ २१ ॥
शरदि कुसुमसङ्गाद्वायवो यान्ति शीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञाः
विगतकलुषमम्भः श्यानपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम् ॥२२॥

सत्यः स्तनमण्डलानि सचन्दनरसैः चन्दनाक्तैः हारैः, सुविपुलं श्रोणीतटं नितम्बदेशं रशनाकलापैः काञ्चीदामभिः तथा पादाम्बुजानि चरणकमलानि कलानां मधुरास्फुटस्वनानां नूपुराणां शेखरैः श्रेष्ठैः विभूषयन्ति ॥ २० ॥

स्फुटेति। अस्मिन् समये विगतमेघं मेघशून्यं चन्द्रेण ताराभिश्च अवकीर्णं व्याप्तं व्योम आकाशं स्फुटैः विकसितैः कुमुदैः चितानां व्याप्तानां राजहंसानां स्थितं स्थितिः येषु तथोक्तानां तथा मरकतमणेः भास इव भासः यस्य तादृशेन वारिणा भूषितानां पूरितानाम् इत्यर्थः तोयाशयानां जलाशयानाम् अतिशयरूपाम् अतिमनोहारिणीं श्रियं वहति दधाति। इत आरभ्य आसर्गसमाप्तेः मालिनीवृत्तं तल्लक्षणं पूर्वमुक्तम् ॥ २१ ॥

शरदीति। शरदि शरत्काले वायवः कुसुमानां जलजपुष्पविशेषाणां सङ्गात् शीताः शीतलाः सन्तः यान्ति वान्ति

दिवसकरमयूखैर्बोध्यमानं प्रभाते
वरयुवतिमुखाभं पङ्कजं जृम्भतेऽद्य।
कुमुदमपि गतेऽस्तं लीयते चन्द्रबिम्बे
हसितमिव बधूनां प्रोषितेषु प्रियेषु ॥ २३ ॥

असितनयनलक्ष्मीं लक्षयित्वोत्पलेषु
क्वणितकनककान्तिं मत्तहंसस्वनेषु।
अधररुचिरशोभां बन्धुजीवे प्रियाणां
पथिकजन इदानीं रोदिति भ्रान्तचेताः॥२४॥

कुसुमानाम् इत्यनेन अस्य सौगन्ध्यमपि व्यज्यते। दिशां विभागाः विगतानि जलदानां वृन्दानि येभ्यः तथोक्ताः मेघावरणशून्या इत्यर्थः अतएव मनोज्ञाः रमणीयाः अम्भः जलं विगतकलुषं कालुष्यरहितं निर्मलम् इत्यर्थः धरित्री पृथ्वी श्यानपङ्का शुष्कपङ्का पङ्कशून्या इत्यर्थः तथा व्योमम् अन्तरीक्षं विमलकिरणः चन्द्रो यस्मिन् तत् ताराभिः नक्षत्रैः विचित्रं मनोहरञ्च ॥ २२ ॥

दिवसकरेति। अद्य अस्मिन् समये प्रभाते पङ्कजं पद्मं दिवसकरमयूखैः सूर्य्यरश्मिभिः बोध्यमानं विकास्यमानम् अतएव वरा सुन्दरी या युवती तस्या मुखस्य आभा इव आभा यस्य तथाभूतं सत् जृम्भते शोभते। कुमुदमपि चन्द्रबिम्बे चन्द्रमण्डले अस्तं गते सति प्रियेषु पतिषु प्रोषितेषु प्रवासं गतेषु सत्सु बधूनां नारीणां हसितम् इव लीयते अन्तर्धानं गच्छति न प्रकाशते इत्यर्थः ॥ २३ ॥

असितेति। इदानीम् अस्मिन् समये पथिकजनः उत्पलेषु नीलेषु इति शेषः प्रियाणां रमणीनाम् असितयोः नयनयोः लक्ष्मीं श्रियं मत्तहंसानां स्वनेषु शब्देषु क्वणितकनकानां

स्त्रीणां विहाय वदनेषु शशाङ्कलक्ष्मीं
कामञ्च हंसवचनं मणिनूपुरेषु।
बन्धूककान्तिमधरेषु मनोहरेषु
क्वापि प्रयाति सुभगा शरदागमश्रीः ॥ २५ ॥
विकचकमलवक्त्रा फुल्लनीलोत्पलाक्षी
विकसितनवकाशश्वेतवासो वसाना।
कुमुदरुचिरहासा कामिनीवोन्मदेयं
प्रतिदिशतु शरद् वश्चेतसः प्रीतिमग्र्याम् ॥२६॥

इति श्रीकालिदासकृतौ ऋतुसंहारे शरद्वर्णनं
नाम तृतीयः सर्गः।

रणितकनकालङ्कारकान्तिं तथा बन्धूजीवे तदाख्यकुसुमे अधरस्य रुचिरां मनोज्ञां शोभां लक्षयित्वा अनुभूय भ्रान्तचेताः व्याकुलमनाः सन् रोदिति ॥ २४ ॥

स्त्रीणामिति। सुभगा मनोहारिणी शरदागमश्रीः शारदीया लक्ष्मीः स्त्रीणां वदनेषु शशाङ्कलक्ष्मीं चन्द्रकान्तिं मणिनूपुरेषु रत्नमञ्जीरेषु कामं यथेष्टं यथोपयुक्तम् इत्यर्थः हंसवचनं हंसरुतं तथा मनोहरेषु अधरेषु बन्धूकस्य तदाख्यकुसुमस्य कान्तिं विहाय परित्यज्य दत्त्वा इत्यर्थः क्वापि कस्मिन् अपि प्रदेशे प्रयाति गच्छति स्वसमयापगमात् विलयं प्राप्नोति इत्यर्थः ॥ २५ ॥

विकचेति। विकचं प्रस्फुटं कमलं वक्त्रं मुखमिव यस्याः अन्यत्र विकचं कमलम् इव वक्त्रं यस्याः सा फुल्लानि नीलोत्पलानि अक्षीणि इव यस्याः सा अन्यत्र फुल्ले नीलोत्पले इव अक्षिणी यस्याः सा विकसितं नवं काशं काशकुसुमं श्वेतवास

## हेमन्तवर्णनम्।

### चतुर्थः सर्गः।

नवप्रवालोद्गमशस्यरम्यः
प्रफुल्ललोध्रः परिपक्वशालिः।
विलीनपद्मः प्रपतत्तुषारो
हेमन्तकालः समुपागतः प्रिये!॥ १॥
मनोहरैः कुङ्कुमरागरक्तैः
तुषारकुन्देन्दुनिभैश्च हारैः।

इव तत् अन्यत्र विकसितं नवं काशमिव श्वेतवासः शुभ्रवसनं वसाना दधाना कुमुदानि रुचिरा हासा इव यस्याः सा अन्यत्र कुमुदानि इव रुचिरा हासा यस्याः तथोक्ता इयं शरद् उन्मदा मदमत्ता कामिनी इव वः युष्माकं चेतसः मनसः अग्र्यां महतीं प्रीतिं प्रतिदिशतु जनयतु॥ २६॥

इति ऋतुसंहारव्याख्यायां शरद्वर्णनं नाम द्वितीयः सर्गः।

---

नवेति। हे प्रिये! नवः प्रवालानां पल्लवानाम् उद्गमो येषां तैः शस्यैः रम्यः प्रफुल्लाः विकसिता लोध्राः तदाख्यवृक्षाः यस्मिन् सः परिपक्वाः शालयः धान्यानि यस्मिन् तथोक्तः विलीनानि शुष्काणि पद्मानि यत्र तादृशः तथा प्रपतन्ति तुषाराणि यस्मिन् तथाभूतः हेमन्तकालः समुपागतः उपस्थितः। उपजातिवृत्तम् आद्यादशात् तदुक्तं स्यात्, इन्द्रवज्रा यदि तौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सा इति, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयौ उपजातयस्ता इति॥ १॥

मनोहरैरिति। (अस्मिन् समये) स्तनाभ्यां शालन्ते शोभन्ते

विलासिनीनां स्तनशालिनीनां
नालं क्रियन्ते स्तनमण्डलानि ॥ २ ॥
न बाहुयुग्मेषु विलासिनीनां
प्रयान्ति सङ्गं वलयाङ्गदानि ।
नितम्बदेशेषु नवं दुकूलं
तन्वंशुकं पीनपयोधरेषु ॥ ३ ॥
काञ्चीगुणैः काञ्चनरत्नचित्रैः
नो भूषयन्ति प्रमदा नितम्बान् ।
न नूपुरैर्हंसरुतं भजद्भिः
पादाम्बुजान्यम्बुजकान्तिभाञ्जि ॥ ४ ॥

इति स्तनशालिन्यः तासां सुस्तनीनाम् इत्यर्थः विलासिनीनां स्तनमण्डलानि कुङ्कुमानां रागेण रञ्जनेन रक्तैः अतएव मनोहरैः तुषारः कुन्दं माघभवकुसुमविशेषः तथा इन्दुश्चन्द्रः तन्निभैः तत्सदृशैः हारैः मौक्तिकैः इति शेषः न अलङ्क्रियन्ते न भूष्यन्ते तेषां शैत्यात् हिमागमे व्यवहारादर्शनात् इति भावः॥२

नेति। (अस्मिन् समये) वलयानि कटकानि अङ्गदानि केयूराणि च विलासिनीनां बाहुयुग्मेषु नवं दुकूलं वसनं नितम्बदेशेषु, तथा पीनपयोधरेषु स्थूलकुचेषु तनु सूक्ष्मम् अंशुकं वस्त्रं सङ्गं स्थानं न प्रयान्ति न प्राप्नुवन्ति शैत्यात् इति भावः यथायथं वचनविपरिणामेन अन्वेतव्यम् ॥ ३ ॥

काञ्चीगुणैरिति। (अस्मिन् समये) प्रमदाः कामिन्यः काञ्चनेन रत्नेन च चित्रैः काञ्चनरत्नखचितैः इत्यर्थः काञ्चीगुणैः रशनागुणैः नितम्बान् नो, तथा हंसरुतं भजद्भिः हंसरुतानुकारिभिः नूपुरैः अम्बुजानां कमलानां कान्तिं भजन्ते इति

गात्राणि कालीयकचर्चितानि
सपत्रलेखानि मुखाम्बुजानि।
शिरांसि कालागुरुधूपितानि
कुर्वन्ति नार्य्यः सुरतोत्सवाय ॥ ५ ॥
रतिश्रमक्षामविपाण्डुवक्त्राः
प्राप्तेऽपि हर्षाभ्युदये तरुण्यः।
हसन्ति नोच्चैर्दशनाग्रभिन्नान्
प्रपीड्यमानानधरानवेक्ष्य ॥ ६ ॥
पीनस्तनोरुस्थलभागशोभाम्
आसाद्य तत्पीड़नजातखेदः।

तथोक्तानि पादाम्बुजानि चरणपद्मानि न भूषयन्ति नालङ्कुर्वन्ति शैत्यात् इति भावः ॥ ४ ॥

गात्राणीति। (अस्मिन् समये) नार्य्यः सुरतोत्सवाय निधुवनक्रीड़नाय गात्राणि अङ्गानि कालीयकं दारुहरिद्रा तेन चर्च्चितानि उपलिप्तानि मुखाम्बुजानि वदनकमलानि पत्रलेखा कपोलयोः रचनाविशेषः तत्सहितानि तदलङ्कृतानि इत्यर्थः तथा शिरांसि कालागुरुणा गन्धद्रव्यविशेषेण धूपितानि धूपित्वा सुरभीकृतानि इत्यर्थः कुर्वन्ति ॥ ५ ॥

रतीति। (अस्मिन् काले) तरुण्यः युवत्यः रतिश्रमेण सुरतपरिश्रमेण क्षामं क्षीणं विशेषेण पाण्डु धूसरवर्णं वक्त्रं मुखं यासां तथोक्ताः सत्यः हर्षाभ्युदये आनन्दोदये प्राप्ते उपस्थितेऽपि दशनाग्रैः दन्ताग्रैः प्रियाणाम् इति शेषः भिन्नान् क्षतान् अतएव प्रपीड्यमानान् क्लिश्यमानान् अधरान् अवेक्ष्य दृष्ट्वा उच्चैः न हसन्ति तथात्वे अधिकपीड़ासम्भवात् इति भावः॥६

तृणाग्रलग्नैस्तुहिनैः पतद्भिः
आक्रन्दतीवोषसि शीतकालः ॥ ७ ॥
प्रभूतशालिप्रसवैश्चितानि
मृगाङ्गनायूथविभूषितानि ।
मनोहरक्रौञ्चनिनादितानि
सीमान्तराण्युत्सुकयन्ति चेतः ॥ ८ ॥
प्रफुल्लनीलोत्पलशोभितानि
सोन्मादकादम्बविभूषितानि ।

पीनेति । शीतकालः पीनेषु स्थूलेषु स्तनेषु ऊरुस्थलभागेषु च नारीणाम् इति शेषः शोभाम् अवकाशम् इत्यर्थः आसाद्य प्राप्य तान् शीतलयित्वा इति भावः सुतरां तत्पीड़नेन तेषां स्तनानाम् ऊरूणाञ्च पीड़नेन नायकैः मर्दनेन जातखेदः उत्पन्नक्लेशः मर्दनेन शीतात्ययात् इति भावः अभीष्टस्थानहरणात् सुदुःखितः सन् इति यावत् उषसि प्रभाते तृणानाम् अग्रेषु लग्नैः पतद्भिः तुहिनैः तुषारैः आक्रन्दति इव तुषारवर्षणच्छलेन रोदिति इव इत्युत्प्रेक्षा ॥ ७ ॥

प्रभूतेति । (अस्मिन् समये) सीमान्तराणि सीमाविभागाः प्रभूतैः प्रचुरैः शालिप्रसवैः धान्यैः चितानि व्याप्तानि मृगाङ्गनानां हरिणीनां यूथैः वृन्दैः विभूषितानि इतस्ततः सञ्चरणात् विचित्राणि इत्यर्थः तथा मनोहरैः क्रौञ्चैः पक्षिविशेषैः निनादितानि शब्दितानि सन्ति चेतः मनः नराणाम् इति शेषः उत्सुकयन्ति प्रमोदयन्ति ॥ ८ ॥

प्रफुल्लेति । (अस्मिन् समये) प्रफुल्लैः विकसितैः नीलोत्पलैः इन्दीवरैः शोभितानि सोन्मादैः मत्तैः कादम्बैः कलहंसैः विभूषितानि प्रसन्नानि निर्मलानि तोयानि येषु तादृशानि तथा

प्रसन्नतोयानि सुशीतलानि
सरांसि चेतांसि हरन्ति पुंसाम् ॥ ९ ॥
पाकं व्रजन्ती हिमजातशीतैः
आधूयमाना सततं मरुद्भिः ।
प्रिये ! प्रियङ्गुः प्रियविप्रयुक्ता
विपाण्डुतां याति विलासिनीव ॥ १० ॥
पुष्पासवामोदसुगन्धिवक्त्रो
निश्वासवातैः सुरभीकृताङ्गः ।
परस्पराङ्गव्यतिसङ्गशायी
शेते जनः कामरसानुविद्धः ॥ ११ ॥

सुशीतलानि सरांसि सरोवराणि पुंसां चेतांसि हरन्ति आह्लादयन्ति इत्यर्थः ॥ ९ ॥

पाकमिति । हे प्रिये ! (अस्मिन् समये) प्रियङ्गुः गोवन्दनी लता हिमजातशीतैः तुषारशीतलैः मरुद्भिः सततम् आधूयमाना प्रकम्प्यमाना अतएव पाकं व्रजन्ती पक्वतां प्राप्नुवती सती प्रियवियुक्ता पतिविरहिता विलासिनी इव विशेषेण पाण्डुतां पाण्डुवर्णतां याति प्राप्नोति ॥ १० ॥

पुष्पेति । (अस्मिन् समये) जनः कान्तः कामिनी च इत्यर्थः पुष्पासवेन पुष्पमधुना तत्पानेन इत्यर्थः यः आमोदः तेन सुगन्धि सुरभि वक्त्रं यस्य सः निश्वासवातैः परस्परनिश्वासपवनैः सुरभीकृतानि अङ्गानि यस्य तथोक्तः कामरसेन अनुविद्धः सम्भोगाभिलाषुक इत्यर्थः अतएव परस्परस्य अङ्गेन व्यतिसङ्गः आलिङ्गनरूपः संसर्गः यस्मिन् तद् यथा तथा शेते इति तथाभूतः सन् शेते स्वपिति तथात्वे शीतात्ययः सुखावाप्तिश्च इति भावः ॥ ११ ॥

दन्तच्छदैः सव्रणदन्तचिह्नैः
स्तनैश्च पाण्यग्रकृताभिलेखैः।
संसूच्यते निर्दयमङ्गनानां
रतोपभोगो नवयौवनानाम्॥ १२॥

काचिद्विभूषयति दर्पणसक्तहस्ता
बालातपेषु वनिता वदनारविन्दम्।
दन्तच्छदं प्रियतमेन निपीतसारं
दन्ताग्रभिन्नमवकृष्य निरीक्षते च॥ १३॥

अन्या प्रकामसुरतश्रमखिन्नदेहा
रात्रिप्रजागरविपाटलनेत्रपद्मा।

दन्तच्छदैरिति। (अस्मिन् काले) सव्रणानि सक्षतानि दन्तानां रदनानां चिह्नानि येषु तादृशैः दन्तच्छदैः अधरैः तथा पाणीनाम् अग्रैः नखैः इत्यर्थः कृतः अभिलेखः अङ्कनं येषु तादृशैः स्तनैश्च करणभूतैः नवयौवनानाम् अङ्गनानां नवयुवतीनाम् इत्यर्थः निर्दयं यथा तथा रतोपभोगः सुरत-सम्भोगः संसूच्यते व्यज्यते॥ १२॥

काचिदिति। काचित् वनिता दर्पणसक्तहस्ता धृतमुकुरा सती बालातपेषु नवोदितरौद्रेषु वदनारविन्दं मुखपद्मं विभू-षयति तथा प्रियतमेन कान्तेन निपीतः निःशेषेण पीतः सारः रसो यस्य तादृशं तथा दन्ताग्रेण भिन्नं खण्डितं दन्तच्छदम् अधरम् अवकृष्य करेण धृत्वा निरीक्षते पश्यति। वसन्ततिलक-वृत्तम् इत आरभ्य आसप्तदशात् तल्लक्षणन्तु उक्तं प्रागेव॥१३॥

अन्येति। (अस्मिन् समये) अन्या काचित् नारी प्रकाम-सुरतेन पर्य्याप्तनिधुवनक्रीड़नेन यः श्रमः तेन खिन्नः क्लान्तः

शय्यान्तदेशलुलिताकुलकेशपाशा
निद्रां प्रयाति मृदुसूर्य्यकराभितप्ता ॥ १४ ॥
निर्माल्यदामपरिमुक्तमनोज्ञगन्धं
मूर्ध्नोऽपनीय घननीलशिरोरुहान्ताः ।
पीनोन्नतस्तनभरानतगात्रयष्ट्यः
कुर्वन्ति केशरचनामपरास्तरुण्यः ॥ १५ ॥
अन्या प्रियेण परिभुक्तमवेच्य गात्रं
हर्षान्विता विरचिताधरचारुशोभा ।

देहः यस्याः सा रात्रौ प्रजागरेण प्रकृष्टजागरणेन विपाटले रक्ते नेत्रपद्मे नयनकमले यस्याः सा तथा शय्याया अन्तदेशे प्रान्तप्रदेशे लुलिताः विक्षिप्ताः आकुलाः विपर्य्यस्ताः केशपाशाः यस्याः तथाभूता मृदुभिः नवोदितत्वात् कोमलैः सूर्य्यकरैः रविमयूखैः अभितप्ता सती निद्रां प्रयाति स्वपिति ॥१४॥

निर्माल्येति। (अस्मिन् समये) घनाः सान्द्राः नीलाः कृष्णवर्णाः ये शिरोरुहाः केशाः तैः अन्ताः रम्याः मनोहारिण्य इत्यर्थः तथा पीनानाम् उन्नतानां स्तनानां भरेण आनता गात्रयष्टिः यासां तथाविधाः अपराः तरुण्यः युवत्यः परिमुक्तः परित्यक्तः मनोज्ञः गन्धो येन तादृशं निर्माल्यदाम पूर्वदिनभुक्तत्वात् उच्छिष्टभूतां स्रजं मूर्ध्नः शिरसः अपनीय अपसार्य्य केशरचनां केशानां रचनां संस्कारं कुर्वन्ति ॥ १५ ॥

अन्येति। नताङ्गी यौवनभरातिशयादिति भावः अन्या काचित् प्रियेण कान्तेन परिभुक्तम् आलिङ्गनचुम्बनादिना सम्भुक्तं गात्रं शरीरम् अवेक्ष्य अवलोक्य हर्षान्विता सम्भोगचिह्नदर्शनात् पुलकिता इत्यर्थः विरचिता विशेषेण रचिता ताम्बूलचर्वणादिना इति भावः अधरस्य शोभा यया तादृशी तथा

रक्तांशुकं परिदधाति नवं नताङ्गी
व्यालम्बिनी विलुलितालककुञ्चिताक्षी ॥१६॥
अन्याश्चिरं सुरतकेलिपरिश्रमेण
खेदं गताः प्रशिथिलीकृतगात्रयष्ट्यः।
संहृष्यमाणविपुलोरुपयोधरान्ताः
अभ्यञ्जनं विदधति प्रमदाः सुशोभाः ॥ १७ ॥
बहुगुणरमणीयो योषितां चित्तहारी
परिणतबहुशालिव्याकुलग्रामसीमः।
विनिपतिततुषारः क्रौञ्चनादोपगीतः
प्रदिशतु हिमयुक्तः काल एषः सुखं वः ॥१८॥

इति श्रीकालिदासकृतौ ऋतुसंहारे हेमन्त-
वर्णनं नाम चतुर्थः सर्गः ॥ ४ ॥

व्यालम्बिनी वेणी तया लक्षणया तद्बन्धनेन हेतुना विलुलितैः विशेषेण आकृष्टैः अलकैः कुन्तलैः हेतुभिः कुञ्चिते क्लेशात् ईषत् मुद्रिते अक्षिणी यस्याः तथाभूता सती नवं नूतनं रक्तांशुकं रक्तवसनं परिदधाति ॥ १६ ॥

अन्या इति। अन्याः सुशोभाः सुन्दर्यः प्रमदाः कामिन्यः सुरतकेलिपरिश्रमेण रतिजनितायासेन खेदं गताः घर्माक्ताः प्रशिथिलीकृताः गात्रयष्टिः यासां ताः तथा संहृष्यमाणाः सम्भोगस्मरणात् विपुलानां पीनानाम् ऊरूणाम् उच्चानां पयोधराणां स्तनानाम् अन्ताः उपरिभागा यासां तादृश्यः सत्यः अभ्यञ्जनं सुगन्धितैलहरिद्रादिमर्दनं विदधति कुर्वन्ति ॥१७॥

बहुगुणेति। बहुभिः गुणैः स्वधर्मैः जगदुपकारकशस्योत्पादनादिरूपैः रमणीयः लोकरञ्जनः योषितां चित्तहारी

## शिशिरवर्णनम्।

### पञ्चमः सर्गः।

प्ररूढशालीक्षुचयावृतक्षितिं
सुस्थस्थितक्रौञ्चनिनादशोभितम्।
प्रकामकामं प्रमदाजनप्रियं
वरोरु! कालं शिशिराह्वयं शृणु॥ १॥

सम्भोगाद्युपयोगितया मनोहरः परिणतैः बहुभिः शालिभिः धान्यैः व्याकुलाः व्याप्ताः ग्रामाणां सीमाः यस्मिन् सः (सीमाशब्दोऽत्र अदन्तः) विनिपतितानि तुषाराणि यस्मिन् तथोक्तः तथा क्रौञ्चानां पक्षिविशेषाणां नादैः उपगीतः समन्तात् शब्दितः एषः हिमयुक्तः हेमन्तः कालः वः युष्माकं सुखं प्रदिशतु विदधातु। अत्र मालिनीवृत्तं तल्लक्षणं पूर्वमुक्तम् ॥ १८॥

इति ऋतुसंहारव्याख्यायां हेमन्तवर्णनं नाम चतुर्थः सर्गः।

---

प्ररूढेति। हे वरोरु! वामोरु! प्ररूढानां जातानां शालीनाम् इक्षूणाञ्च चयैः समूहैः आवृता क्षितिः भूमिर्यस्मिन् तं सुस्थं वर्षवातादिविगमात् निरुद्वेगं यथा तथा स्थितानां क्रौञ्चानां पक्षिविशेषाणां निनादेन शोभितं प्रकामाः पर्य्याप्ताः काम्यन्ते इति कामाः भोगाः यस्मिन् तादृशम् अतएव प्रमदाजनानां प्रियं प्रीतिदं शिशिर आह्वयम् अभिधानं यस्य तं कालं शृणु। यद्यपि कालस्य श्रावणप्रत्यक्षता नास्ति तथापि अत्र तत्कार्य्यस्य वर्णनीयत्वेन तथोपचारः। सर्गेऽस्मिन् आदशमात् पूर्वोक्तलक्षणं वंशस्थविलं वृत्तम्॥ १॥

निरुद्धवातायनमन्दिरोदरं
हुताशनो भानुमतो गभस्तयः।
गुरूणि वासांस्यवलाः सयौवनाः
प्रयान्ति कालेऽत्र जनस्य सेव्यताम्॥ २॥
न चन्दनं चन्द्रमरीचिशीतलं
न हर्म्यपृष्ठं शरदिन्दुनिर्मलम्।
न वायवः सान्द्रतुषारशीतलाः
जनस्य चित्तं रमयन्ति साम्प्रतम्॥ ३॥
तुषारसङ्घातनिपातशीतलाः
शशाङ्कभाभिः शिशिरीकृताः पुनः।

निरुद्धेति। अत्र काले शिशिरे निरुद्धं शीतवायुप्रवेश-निवारणार्थं रुद्धीकृतं वातायनं गवाक्षः यस्य तादृशं मन्दिरो-दरं गृहाभ्यन्तरं हुताशनः अग्निः भानुमतः सूर्य्यस्य गभस्तयः किरणाः गुरूणि स्थूलानि वासांसि वस्त्राणि तथा सयौवना युवत्यः अवलाः स्त्रियः शीतकाले भवेदुष्णा उष्णकाले च शीतला। नवयौवनमध्यस्था सा श्यामा परिगीयते इत्युक्त-लक्षणाः श्यामा इति भावः जनस्य सेव्यतां भोग्यतां प्रयान्ति भोग्या भवन्तीत्यर्थः॥ २॥

नेति। साम्प्रतम् इदानीं चन्द्रमरीचिवत् शीतलं चन्दनं शरदिन्दुवत् शारदीयचन्द्रवत् निर्मलं हर्म्यपृष्ठम् अट्टालिको-परिभागः तथा सान्द्रेण घनेन तुषारेण हिमेन शीतला वाय-वश्च जनस्य चित्तं न रमयन्ति न प्रीणयन्ति यथायथं वचन-विपरिणामेन प्रत्येकेन नञा च अन्वेतव्यम्॥ ३॥

तुषारेति। अस्मिन् काले तुषारसङ्घातानां हिमराशीनां

विपाण्डुतारागणचारुभूषणाः
जनस्य सेव्या न भवन्ति रात्रयः ॥ ४ ॥
गृहीतताम्बूलविलेपनस्रजः
पुष्पासवामोदितवक्त्रपङ्कजाः।
प्रकामकालागुरुधूपवासितं
विशन्ति शय्यागृहमुत्सुकास्त्रियः ॥ ५ ॥
कृतापराधान् बहुशोऽपि तर्जितान्
सवेपथून् साध्वसलुप्तचेतसः।
निरीक्ष्य भर्त्तॄन् सुरताभिलाषिणः
स्त्रियोऽपराधान् समदा विसस्मरुः ॥ ६ ॥

निपातेन पतनेन शीतलाः पुनः तथा शशाङ्कभाभिः चन्द्रमयूखैः शिशिरीकृताः शीतलीकृताः रात्रयः विपाण्डुभिः शुभ्रवर्णैः तारागणैः चारु मनोज्ञं भूषणं शोभा यासां ताः (अपिरत्रा-ध्याहार्य्यः) जनस्य सेव्या न भवन्ति अतिशीतलत्वात् न सुखं जनयन्तीत्यर्थः ॥ ४ ॥

गृहीतेति। उत्सुकाः कान्तसमागमार्थमुत्कण्ठिताः स्त्रियः गृहीताः ताम्बूलानि विलेपनानि स्रजश्च याभिः तथोक्ताः तथा पुष्पासवेन पुष्पजमधुना आमोदितं सुरभीकृतं वक्त्रपङ्कजं मुख-पद्मं यासां तथाभूताः सत्यः प्रकामैः यथेष्टैः कालागुरूणां गन्ध-द्रव्यविशेषाणां धूपैः तन्निर्मितैः इत्यर्थः वासितम् आमोदितं शय्यागृहं विशन्ति गच्छन्ति ॥ ५ ॥

कृतापराधानिति। समदाः आसवमत्ताः स्त्रियः कामिन्यः कृतापराधान् अपराधिनः अतएव बहुशः अनेकशः तर्जितान् भर्त्सितान् सवेपथून् सकम्पान् तथा साध्वसेन भयेन लुप्तं चेतः

प्रकामकामैर्युवभिः सुनिर्दयं
निशासु दीर्घास्वभिरामिता भृशम्।
भ्रमन्ति मन्दं श्रमखेदितोरसः
क्षपावसाने नवयौवनाः स्त्रियः ॥ ७ ॥
मनोज्ञकूर्पांशुकपीड़ितस्तनाः
सरागकौशेयविभूषितोरवः।
निवेशितान्तःकुसुमैः शिरोरुहैः
विभूषयन्तीव हिमागमं स्त्रियः ॥ ८ ॥

येषाम् अपराधित्वादिति भावः तथाभूतान् अपि भर्तृन् पतीन् सुरताभिलाषिणः सम्भोगार्थिनः निरीक्ष्य अपराधान् तैः पूर्वकृतानिति शेषः विसस्मरुः विस्मृतवत्यः शीतार्त्ततया सम्भोगी शीतापगमः स्यादिति विविच्य दोषान् न गणयामासुः इति भावः ॥ ६ ॥

प्रकामेति। नवयौवनाः स्त्रियः दीर्घासु निशासु प्रकामाः प्रबलाः कामाः भोगाभिलाषा येषां तादृशैः युवभिः सुनिर्दयम् अतिगाढ़ं तथा भृशम् अत्यर्थम् अभिरामिताः कृतरमणाः अतएव श्रमेण सम्भोगजनितेन आयासेन खेदितं घर्माक्तम् उरः वक्षःस्थलं यासां तथाभूताः सत्यः क्षपावसाने प्रभाते मन्दं क्लान्तिवशात् मन्थरं यथा तथा भ्रमन्ति इतस्ततः गच्छन्ति॥७॥

मनोज्ञेति। स्त्रियः नार्य्यः मनोज्ञेन मनोहरेण कूर्पांशुकेन वस्त्रविशेषेण काञ्चुलीति भाषया प्रसिद्धेन पीड़ितौ आच्छादितौ स्तनौ यासां ताः सरागं रञ्जनोज्ज्वलं यत् कौशेयं कृमिकोशोत्थं वस्त्रं तेन विभूषितौ ऊरू यासां तथाविधाः परिहितरञ्जितकौशेयवसना इत्यर्थः निवेशितानि अन्तः अभ्यन्तरे कुसु-

पयोधरै: कुङ्कुमरागपिञ्जरै:
सुखोपसेव्यैर्नवयौवनोष्मभि:।
विलासिनीनां परिपीड़ितोरस:
स्वपन्ति शीतं परिभूय कामिन: ॥ ९ ॥
सुगन्धिनिश्वासविकम्पितोत्पलं
मनोहरं कामरतिप्रबोधकम्।
निशासु हृष्टा: सह कामिभि: स्त्रिय:
पिबन्ति मद्यं मदनीयमुत्तमम् ॥ १० ॥
अपगतमदरागा योषिदेका प्रभाते
कृतविनतकुचाग्रा पत्युरालिङ्गनेन।

मानि येषां तादृशै: शिरोरुहै: उपलक्षिता: सत्य: (विशेषणे तृतीया) हिमागमं शीतकालं विभूषयन्तीव अलङ्कुर्वन्तीव ॥८॥

पयोधरैरिति। कामिन: विलासिनीनां कामिनीनां कुङ्कुमरागेण पिञ्जरै: पिङ्गलवर्णै: तदनुलिप्तै: इत्यर्थ: नवयौवनस्य उष्म उष्णता येषु तै: अतएव सुखसेव्यै: सुखेन भोग्यै: पयोधरै: कुचै: परिपीड़ितम् उर: वक्ष:स्थलं येषां तथाभूता: सन्त: शीतं परिभूय पराजित्य स्वपन्ति निद्रान्ति ॥ ९ ॥

सुगन्धीति। अस्मिन् काले स्त्रिय: कामिन्य: निशासु हृष्टा: सानन्दा: सत्य: कामिभि: कान्तै: सह सुगन्धिभिर्निश्वासै: विकम्पितम् उत्पलम् (आसवशोधनार्थं दत्तं) कुवलयं यस्मिन् तथोक्तं कामिन अभिलाषेण या रति: अभिलाषानुरूपं सुरतम् इत्यर्थ: तस्य प्रबोधकम् उद्दीपकं मनोहरं मन:प्रीतिकरं मदनीयम् उल्लासकम् उत्तमं मद्यं पिबन्ति ॥ १० ॥

अपगतेति। एका काचित् योषित् अपगत: विगत: मद-

प्रियतमपरिभुक्तं वीक्षमाणा स्वदेहं
व्रजति शयनवासाद्वासमन्यद् हसन्ती॥११॥
अगुरुसुरभिधूपामोदितं केशपाशं
गलितकुसुममालं कुञ्चिताग्रं वहन्ती
त्यजति गुरुनितम्बा निम्ननाभिः सुमध्या
उषसि शयनवासं कामिनी चारुशोभा ॥१२॥
कनककमलकान्तैः सद्य एवाम्बुधौतैः
श्रवणतटनिषक्तैः पाटलोपान्तनेत्रैः ।

रागः मद्यपानजनितोष्मा यस्याः सा बहुसमयातिपातादिति भावः तथा पत्युरालिङ्गनेन क्नते विनते ईषदवनते कुचाग्रे चुचुकौ यस्याः तादृशी सती प्रभाते प्रियतमेन परिभुक्तम् आलिङ्गन-मर्दनादिना सम्भुक्तं स्वदेहं वीक्षमाणा अतएव हसन्ती सम्भोग-स्मरणेन हर्षोदयादिति भावः शयनवासात् शय्यागृहात् अन्यत् वासं गृहं व्रजति गच्छति। इत आरभ्य आसर्गसमाप्तेः पूर्वोक्त-लक्षणं मालिनीवृत्तम् ॥ ११ ॥

अगुरु इति। गुरुः विशालः नितम्बः यस्याः सा सुशोभनं मध्यं कटिदेशः यस्याः सा निम्नः गभीरः नाभिः यस्याः तथोक्ता तथा चारुः मनोज्ञा शोभा सौन्दर्यं यस्याः तादृशी (काचित्) कामिनी उषसि प्रातःकाले अगुरुभिर्गन्धद्रव्यविशेषैः सुरभयः ये धूपाः तैः आमोदितं सुरभीकृतं गलिता च्युता कुसुममाला यस्मात् तथोक्तं सम्भोगेन आलुलायितमित्यर्थः तथा कुञ्चितं कुटिलम् अग्रं यस्य तं केशपाशं वहन्ती दधती शयनवासं शय्यागृहं त्यजति ॥ १२ ॥

कनकेति। अद्य इदानीं योषितः काश्चित् नार्यः उषसि प्रभातकाले कनककमलवत् स्वर्णपद्मवत् कान्तानि रम्याणि

उषसि वदनविम्बैरंससंसक्तकेशैः
श्रिय इव गृहमध्ये संस्थिता योषितोऽद्य ॥१३॥
पृथुजघनभरार्त्ताः किञ्चिदानम्रमध्याः
स्तनभरपरिखेदान्मन्दमन्दं व्रजन्त्यः।
सुरतशयनवेशं नैशमन्यत् प्रहाय
दधति दिवसयोग्यं वेशमन्यास्तरुण्यः ॥ १४ ॥
नखपदकृतभङ्गान् वीक्षमाणाः स्तनान्तान्
अधरकिसलयाग्रं दन्तभिन्नं स्पृशन्त्यः।

तैः सद्य एव तत्क्षणादेव अम्बुधौतैः जलप्रक्षालितैः श्रवणतटेषु कर्णप्रान्तेषु निषक्तैः आकर्णाकृष्टैः इत्यर्थः पाटलाः आरक्ताः उपान्ताः येषां तादृशैः नेत्रैः तथा अंशे स्कन्धदेशे संसक्ताः पतिताः केशाः येषां तादृशैः वदनविम्बैः मुखमण्डलैश्च उपलक्षिताः सत्यः गृहमध्ये श्रिय इव गृहलक्ष्म्य इव संस्थिताः नतु गृहात् निर्गता इत्यर्थः प्रथमद्वितीयविशेषणे वदनविम्बैरित्यनेनापि योजनीये इति ॥ १३ ॥

पृथु इति। पृथुभिर्महद्भिः जघनभरैः आर्त्ताः किञ्चित् ईषत् आनम्रं मध्यं यासां ताः तथा स्तनानां भरेण यः परिखेदः आयासः तस्मात् मन्दमन्दं व्रजन्त्यः गमनशीलाः अन्याः तरुण्यः नैशं निशाकालीनं सुरताय शयनं सुरतशयनं तस्य यो वेशः परिच्छदः तं प्रहाय परित्यज्य अन्यं दिवसयोग्यं वेशं दधति धारयन्ति ॥ १४ ॥

नखेति। (काश्चन) तरुण्यः सवितुः सूर्य्यस्य उदयकाले प्रातःकाले स्तनान्तान् स्तनानाम् अन्तान् उपरिभागान् नखपदैः नखाघातचिह्नैः कृतः भङ्गः रचनाविशेषः येषु तान् नख-

अभिमतरतवेशं नन्दयन्त्यस्तरुण्यः
सवितुरुदयकाले भूषयन्त्याननानि ॥ १५ ॥

प्रचुरगुड़विकारः स्वादुशालीक्षुरम्यः
प्रबलसुरतकेलिर्जातकन्दर्पदर्पः ।
प्रियजनरहितानां चित्तसन्तापहेतुः
शिशिरसमय एषः श्रेयसे वोऽस्तु नित्यम् ॥१६॥

इति श्रीकालिदासकृतौ ऋतुसंहारे शिशिर-
वर्णनं नाम पञ्चमः सर्गः ॥ ५ ॥

क्षतान् इत्यर्थः तथा अधरा एव किशलयाः पल्लवाः तेषाम् अग्रं दन्तभिन्नं दशनक्षतं वीक्षमाणाः पश्यन्त्यः स्पृशन्त्यश्च अभिमतम् अभीष्टं यत् रतं तस्य वेशः चिह्नं पूर्वोक्तं नन्दयन्त्यः प्रशंसन्त्यः सत्यः आननानि मुखानि भूषयन्ति अलङ्कुर्वन्ति ॥ १५ ॥

प्रचुरेति । प्रचुराः बहवः गुड़ानां खार्जुरादीनां विकाराः प्रकाराः खण्डशर्करादयः यस्मिन् तथोक्तः स्वादुभिः शालिभिः इक्षुभिश्च रम्यः प्रबलः प्रवृद्धः सुरतकेलिः यत्र तादृशः अतएव जातः कन्दर्पस्य कामस्य दर्पः गर्वः यस्मिन् सः प्रबलमन्मथ इत्यर्थः सुतरां प्रियजनरहितानां विरहिणामित्यर्थः चित्तस्य मनसः यः सन्तापः तस्य हेतुः एषः शिशिरसमयः वः युष्माकं नित्यं सततं श्रेयसे मङ्गलाय सुखाय इत्यर्थः अस्तु भवतु ॥१६॥

इति ऋतुसंहारव्याख्यायां शिशिरवर्णनं नाम पञ्चमः सर्गः ।

---

## वसन्तवर्णनम् ।

### षष्ठः सर्गः ।

प्रफुल्लचूताङ्कुरतीक्ष्णसायको
द्विरेफमालाविलसद्धनुर्गुणः ।
मनांसि भेत्तुं सुरतप्रसङ्गिनां
वसन्तयोधः समुपागतः प्रिये ! ॥ १ ॥

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये ! चारुतरं वसन्ते ॥ २ ॥

वापीजलानां मणिमेखलानां
शशाङ्कभासां प्रमदाजनानाम् ।

प्रफुल्लेति । हे प्रिये ! प्रफुल्लाः पुष्पिता ये चूतानाम् अङ्कुराः ते एव तीक्ष्णाः सायकाः शराः यस्य सः तथा द्विरेफमालाः भ्रमरपङ्क्तय एव विलसन् धनुर्गुणः मौर्वी यस्य तादृशः वसन्त एव योधः वीरः सुरतप्रसङ्गिनां कामुकानां मनांसि भेत्तुं विदारयितुं समुपागतः उपस्थितः । वंशस्थविलं वृत्तं तल्लक्षणन्तु पूर्वमुक्तम् ॥ १ ॥

द्रुमा इति । हे प्रिये ! वसन्ते सर्वं वस्तु इति शेषः चारुतरं मनोज्ञं (तथाहि) द्रुमाः वृक्षाः सपुष्पाः पुष्पिताः सलिलं जलं सपद्मं स्त्रियः नार्य्यः सकामाः रत्यर्थिन्यः पवनः सुगन्धिः प्रदोषाः रजन्यः सन्ध्यासमया वा सुखाः सुखजनकाः दिवसाश्च रम्याः मनोहराः । इत आरभ्य आपञ्चमात् उपजातिवृत्तम्॥२॥

वापीति । अयं वसन्तः वापीजलानां दीर्घिकासलिलानां

चूतद्रुमाणां कुसुमानतानां
ददाति सौरभ्यमयं वसन्तः ॥ ३ ॥
कुसुम्भरागारुणितैर्दुकूलैः
नितम्बविम्बानि विलासिनीनाम्।
तन्वंशुकैः कुङ्कुमरागगौरैः
अलङ्क्रियन्ते स्तनमण्डलानि ॥ ४ ॥
कर्णेषु योग्यं नवकर्णिकारं
चलेषु नीलेष्वलकेष्वशोकः।
पुष्पं च फुल्लं नवमल्लिकायाः
प्रयाति कान्तिं प्रमदाजनस्य ॥ ५ ॥

मणिमेखलानां रत्नखचितकाञ्चीनां शशाङ्कभासां चन्द्रकिरणानां प्रमदाजनानां रमणीनां तथा कुसुमैः नतानां भरातिशयादिति भावः चूतद्रुमाणां रसालतरूणां सौरभ्यं सौभाग्यं समादरमित्यर्थः ददाति वाप्यादय इदानीं समादरेण सेव्यन्ते इति भावः ॥ ३ ॥

कुसुम्भेति। ( अस्मिन् काले ) विलासिनीनां कामिनीनां नितम्बविम्बानि नितम्बदेशाः कुसुम्भस्य रञ्जनद्रव्यविशेषस्य रागेण अरुणितैः रञ्जितैः दुकूलैः वस्त्रैः तथा स्तनमण्डलानि कुङ्कुमरागेण गौरैः गौरवर्णैः पीतवर्णैः इत्यर्थः तन्वंशुकैः सूक्ष्मवसनैः अलङ्क्रियन्ते ॥ ४ ॥

कर्णेषु इति। (अस्मिन् समये) प्रमदाजनस्य कर्णेषु योग्यं कर्णभूषणयोग्यं नवं कर्णिकारकुसुमं चलेषु चञ्चलेषु नीलेषु कृष्णवर्णेषु अलकेषु चूर्णकुन्तलेषु अर्पित इति शेषः अशोकः

स्तनेषु हाराः सितचन्दनार्द्रा
भुजेषु सङ्गं वलयाङ्गदानि।
प्रयान्त्यनङ्गातुरमानसानां
नितम्बिनीनां जघनेषु काञ्च्यः॥ ६॥

सपत्रलेखेषु विलासिनीनां
वक्त्रेषु हेमाम्बुरुहोपमेषु।
स्तनान्तरे मौक्तिकसङ्गजातः
स्वेदोद्गमो विस्तरतामुपैति॥ ७॥

उच्छ्वासयन्त्यः श्लथबन्धनानि
गात्राणि कन्दर्पसमाकुलानि।

अशोकपुष्पं तथा नवमल्लिकायाः फुल्लं विकसितं पुष्पञ्च कान्तिं शोभां प्रयाति प्राप्नोति॥ ५॥

स्तनेष्विति। (अस्मिन् समये) अनङ्गातुरमानसानां कामार्त्तानां नितम्बिनीनां प्रशस्तनितम्बशालिनीनां प्रमदानां स्तनेषु सितचन्दनेन श्वेतचन्दनेन आर्द्राः लिप्ताः हाराः भुजेषु हस्तेषु वलयानि कटकानि अङ्गदानि केयूराणि च तथा जघनेषु कटीपुरोवर्त्तिप्रदेशेषु काञ्च्यः मेखलाः सङ्गं संसर्गं प्रयान्ति। उपेन्द्रवज्रावृत्तम्॥ ६॥

सपत्रेति। (अस्मिन् काले) विलासिनीनां पत्रलेखा कपोलयोः कस्तूर्य्यादिकृतरचनाविशेषः तत्सहितेषु हेमाम्बुरुहोपमेषु स्वर्णपद्मसदृशेषु वक्त्रेषु मुखेषु तथा स्तनान्तरे स्तनयोः मध्ये मौक्तिकानां हारस्थितानाम् इत्यर्थः सङ्गेन जातः स्वेदोद्गमः घर्मविन्दुः विस्तरतां विस्तारम् उपैति प्राप्नोति इतः आरभ्य आनवमात् उपजाति वृत्तम्॥ ७॥

समीपवर्त्तिष्वधुना प्रियेषु
समुत्सुका एव भवन्ति नार्य्यः ॥ ८ ॥
तनूनि पाण्डूनि मदालसानि
मुहुर्मुहुर्जृम्भणतत्पराणि।
अङ्गान्यनङ्गः प्रमदाजनस्य
करोति लावण्यरसोत्सुकानि ॥ ९ ॥
नेत्रेषु लोलो मदिरालसेषु
गण्डेषु पाण्डुः कठिनः स्तनेषु।
मध्येषु निम्नो जघनेषु पीनः
स्त्रीणामनङ्गो बहुधा स्थितोऽद्य ॥ १० ॥

उच्छ्वासयन्त्य इति। अधुना नार्य्यः प्रियेषु कान्तेषु समीपवर्त्तिषु सन्निहितेषु सत्सु समुत्सुकाः सत्वरा इत्यर्थः सत्यः कन्दर्पसमाकुलानि कामार्त्तानि अतएव श्लथानि बन्धनानि वसनग्रन्थयः येषां तादृशानि गात्राणि उच्छ्वासयन्त्यः उच्छ्वासयन्त्य एव बभूवुः ॥ ८ ॥

तनूनि इति। अधुना अनङ्गः कामः प्रमदाजनस्य कामिन्याः अङ्गानि तनूनि क्शानि कामभोगार्थं चिन्ताजागरणवशात् इति भावः पाण्डूनि पाण्डुवर्णानि मदालसानि कामजनितेन मदेन अलसानि मन्थराणि जड़ानि इत्यर्थः तथा लावण्ये सौन्दर्य्ये निजसौन्दर्य्यसम्पादने इत्यर्थः रसे कामालापजे आनन्दे उत्सुकानि करोति ॥ ९ ॥

नेत्रेष्विति। अद्य इदानीम् अनङ्गः कामः स्त्रीणां मदिरया मद्यपानेन अलसेषु मन्थरेषु जड़ेषु नेत्रेषु लोलः चपलः गण्डेषु कपोलेषु पाण्डुः पाण्डुरवर्णः स्तनेषु कठिनः मध्येषु

अङ्गानि निद्रालसविभ्रमाणि
वाक्यानि किञ्चिन्मदलालसानि।
भ्रूक्षेपजिह्मानि च वीक्षितानि
करोति कामः प्रमदाजनानाम्॥ ११॥
प्रियङ्गुकालीयककुङ्कुमानि
स्तनेषु गौरेषु विलासिनीभिः।
आलिप्यते चन्दनमङ्गनाभिः
मदालसाभिर्मृगनाभियुक्तम्॥ १२॥

मध्यदेशेषु नाभ्यादिषु इत्यर्थः निम्नः गभीरः तथा जघनेषु नितम्बेषु पीनः विशालः अतएव बहुधा बहुभिः प्रकारैः चापल्यपाण्डुत्वकाठिन्यादिरूपैः स्थितः। नेत्रचापल्यादीनि अनङ्गकार्य्याणि इति भावः। अत्र इन्द्रवज्रावृत्तं लक्षणन्तु पूर्वमुक्तम्॥ १०॥

अङ्गानीति। (अस्मिन् काले) कामः प्रमदाजनानां अङ्गानि निद्रया अलसानि रात्रिजागरणवशात् इति भावः विभ्रमाणि विभ्रमः शृङ्गारचेष्टा तद्युक्तानि इत्यर्थः वाक्यानि किञ्चित् ईषत् मदेन मद्यपानेन लालसानि जड़ितानि तथा वीक्षितानि दर्शनानि भ्रूक्षेपेण भ्रूभङ्गेन जिह्मानि कुटिलानि करोति। इत आरभ्य आचतुर्दशात् उपजातिवृत्तम्। ११॥

प्रियङ्गु इति। (अस्मिन् काले) मदालसाभिः मदेन मद्य-पानेन अलसाभिः विलासिनीभिः अङ्गनाभिः गौरेषु गौरवर्णेषु स्तनेषु प्रियङ्गुभिः कालीयकैश्च सहितानि कुङ्कुमानि तथा मृगनाभियुक्तं कस्तूरीमिश्रं चन्दनम् आलिप्यते॥ १२॥

गुरूणि वासांसि विहाय तूर्णं
तनूनि लाक्षारसरञ्जितानि ।
सुगन्धिकालागुरुधूपितानि
धत्ते जनः कामशरानुविद्धः ॥ १३ ॥
पुंस्कोकिलश्चूतरसासवेन
मत्तः प्रियां चुम्बति रागहृष्टः ।
गुञ्जन् द्विरेफोऽप्ययमम्बुजस्थः
प्रियं प्रियायाः प्रकरोति चाटु ॥ १४ ॥
ताम्रप्रबालस्तबकावनम्राः
चूतद्रुमाः पुष्पितचारुशाखाः ।

गुरूणीति । ( अस्मिन् काले ) कामशरेण कन्दर्पबाणेन अनुविद्धः जनः गुरूणि घनानि वासांसि वस्त्राणि विहाय त्यक्त्वा तूर्णं शीघ्रं लाक्षारसेन रञ्जितानि सुगन्धिभिः कालागुरुभिः धूपितानि सुरभीकृतानि इत्यर्थः तनूनि सूक्ष्माणि वासांसि धत्ते परिदधाति ॥ १३ ॥

पुंस्कोकिल इति। (अस्मिन् समये) पुमान् कोकिलः चूतस्य रस एव आसवः मद्यं तेन मत्तः तथा रागेण अनुरागेण कामजनितावेगेनेत्यर्थः हृष्टः उल्लासितः सन् प्रियां कान्तां कोकिलां चुम्बति तथा अयम् अम्बुजस्थः पद्मस्थः द्विरेफः भ्रमरोऽपि गुञ्जन् मधुरमालपन् प्रियायाः कान्तायाः भ्रमर्या इत्यर्थः चाटु प्रियं सन्तोषविधानमित्यर्थः प्रकरोति तिर्य्यक्जातीनामपि अयमुन्मादकः कालः किमुत मानवानामिति भावः ॥ १४ ॥

ताम्रेति । ताम्राणाम् आरक्तानां प्रबालानां पल्लवानां

कुर्वन्ति कामं पवनावधूताः
पर्य्युत्सुकं मानसमङ्गनानाम् ॥ १५ ॥
आमूलतो विद्रुमरागताम्रं
सपल्लवाः पुष्पचयं दधानाः
कुर्वन्त्यशोका हृदयं सशोकं
निरीक्ष्यमाणा नवयौवनानाम् ॥ १६ ॥
मत्तद्विरेफपरिचुम्बितचारुपुष्पा
मन्दानिलाकुलितनम्रमृदुप्रवालाः।

स्तवकैः गुच्छैः अवनम्राः आनताः पुष्पिताः सञ्जातपुष्पाः अतएव चारवः मनोहराः शाखाः येषां तादृशाः पवनेन वायुना अवधूताः कम्पिताः चूतद्रुमाः रसालतरवः अङ्गनानां नारीणां मानसं कामं यथेष्टम् अत्यन्तम् इत्यर्थः पर्य्युत्सुकम् उत्कण्ठितं कामोद्रेकात् इति भावः कुर्वन्ति। अत्र इन्द्रवज्रावृत्तम् ॥१५॥

आमूलत इति। (अस्मिन् काले) सपल्लवाः पल्लवसहिताः अशोकाः अशोकतरवः आमूलतः आमूलात् मूलात् आरभ्य इत्यर्थः विद्रुमस्य प्रवालस्य राग इव रागो यस्य तत् ताम्रं रक्तं पुष्पचयं कुसुमप्रकरं दधानाः धारयन्तः निरीक्ष्यमाणाः दृश्यमानाः सन्तः नवयौवनानां नारीणां नराणाञ्च हृदयं सशोकं शोकाकुलं मदनोन्मादकत्वात् अतिव्याकुलं कुर्वन्ति। उपजातिवृत्तम् ॥ १६ ॥

मत्तेति। मत्तैः द्विरेफैः भ्रमरैः परिचुम्बितानि चारूणि मनोज्ञानि पुष्पाणि यासां ताः मन्दानिलेन मृदुपवनेन आकुलिताः कम्पिताः मृदवः कोमलाः प्रवालाः पल्लवा यासां तादृश्यः समवेक्ष्यमाणाः परिदृश्यमानाः बाला अभिनवाः अति-

कुर्वन्ति कामिमनसां सहसोत्सुकत्वम्
बालातिमुक्तलतिका: समवेच्यमाणा: ॥ १७॥
कान्ताननद्युतिमुषामचिरोद्गतानां
शोभां परां कुरुवकद्रुममञ्जरीणाम्।
दृष्ट्वा प्रिये! सहृदयस्य भवेन्न कस्य
कन्दर्पबाणनिकरैर्व्यथितं हि चेत: ? ॥ १८ ॥
आदीप्तवह्निसदृशैर्मरुतावधूतै:
सर्वत्र किंशुकवनै: कुसुमावनम्रै:।
सद्यो वसन्तसमये समुपागते हि
रक्तांशुका नववधूरिव भाति भूमि: ॥ १९ ॥

मुक्तलतिका: माधवीलता: सहसा कामिनां जनानां मनांसि तेषाम् उत्सुकत्वं कुर्वन्ति तादृशमाधवीलतादर्शनेन कामिन: कामार्थिन: भवन्ति इति भाव:। इत: आरभ्य आषड्विंशात् वसन्ततिलकं वृत्तं, लक्षणन्तु पूर्वमुक्तम्॥ ॥ १७ ॥

कान्ताननेति। हे प्रिये! अचिरोद्गतानाम् अभिनवोदितानां कान्ताया यत् आननं मुखं तस्य या द्युति: कान्ति: तं मुष्णन्ति अपहरन्ति इति तादृशीनां प्रियामुखकान्तीनाम् इत्यर्थ: कुरुवका एव द्रुमा: वृक्षा: तेषां मञ्जरीणां परां महतीं शोभां सौन्दर्यं दृष्ट्वा सहृदयस्य सचेतस: कस्य जनस्य चेत: मन: कन्दर्पबाणनिकरै: कामशरसङ्घातै: व्यथितं विद्धं न भवेत्? अपितु सर्वस्य एव भवेत् इत्यर्थ:। तादृशीं मञ्जरीं विलोक्य सर्वं एव कामार्त्ता भवन्ति इति भाव: ॥ १८ ॥

आदीप्तेति। वसन्तसमये समुपागते उपस्थिते सति भूमि: पृथिवी सद्य: झटिति आदीप्तवह्निसदृशै: प्रज्वलिताग्निकल्पै:

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं ?
किं कर्णिकारकुसुमैर्न कृतं नु दग्धम् ? ।
यत् कोकिलः पुनरयं मधुरैर्वचोभिः
यूनां मनः सुवदनानिहितं निहन्ति ॥ २० ॥

पुंस्कोकिलैः कलवचोभिरुपात्तहर्षैः
कूजद्भिरुन्मदकलानि वचांसि भृङ्गैः ।
लज्जान्वितं सविनयं हृदयं क्षणेन
पर्य्याकुलं कुलगृहेऽपि कृतं वधूनाम् ॥ २१ ॥

मरुता वायुना अवधूतैः कम्पितैः कुसुमावनम्रैः पुष्पभारनतैः सर्वत्र सर्वेषु स्थानेषु स्थितैः इत्यर्थः किंशुकवनैः पलाशकाननैः उपलक्षिता अतएव रक्तांशुका रक्तवसना नववधूः नवोढ़ा कामिनी इव हि निश्चितं भाति शोभते ॥ १९ ॥

किमिति। यूनां तरुणानां सुवदनासु कान्तासु निहितम् आसक्तितं मनः शुकस्य पक्षिविशेषस्य मुखवत् छविः कान्तिः येषां तैः रक्तकुसुमैः इत्यर्थः किंशुकैः पलाशैः किं न भिन्नं न विदारितम् ? अपितु भिन्नमेव तथा कर्णिकारकुसुमैः किं नु वितर्के दग्धं न कृतम् अपितु दग्धमेव अतीवोद्दीपकत्वात् उभयेषाम् इति भावः पुनश्च अयं कोकिलः मधुरैः वचोभिः कुहुरवैः यत् निहन्ति निपीड़यति इदम् अतीव अत्याचार इति पूरणीयं क्षतेषु खड्गाघात इति भावः ॥ २० ॥

पुंस्कोकिलैरिति। (अस्मिन् समये) कलानि अव्यक्तमधुराणि वचांसि येषां तैः उपात्तहर्षैः वसन्तोदयात् सञ्जातप्रमोदैः पुंस्कोकिलैः तथा उन्मदानि मदजनितानि कलानि अस्फुट-मधुराणि वचांसि कूजद्भिः गुञ्जद्भिः भृङ्गैः कुलमेव गृहं तस्मिन्

आकम्पयन् कुसुमिताः सहकारशाखाः
विस्तारयन् परभृतस्य वचांसि दिक्षु।
वायुर्विवाति हृदयानि हरन् नराणां
नीहारपातविगमात् सुभगो वसन्ते ॥ २२ ॥
कुन्दैः सविभ्रमबधूहसितावदातैः
उद्योतितान्युपवनानि मनोहराणि।
चित्तं मुनेरपि हरन्ति निवृत्तरागं
प्रागेव रागमलिनानि मनांसि यूनाम् ॥२३॥

स्थितानाम् इत्यध्याहार्य्यं बधूनां कुलनारीणाम् अपि इत्यर्थः लज्जान्वितं सलज्जं सविनयं विनययुक्तम् औद्धत्यरहितम् इत्यर्थः हृदयं क्षणेन पर्य्याकुलं कृतम् ॥ २१ ॥

आकम्पयन्निति। वसन्ते नीहारस्य शिशिरस्य पातविगमात् हिमात्ययात् इत्यर्थः सुभगः मृदुमधुरः वायुः कुसुमिताः सञ्जातपुष्पाः सहकारलताः आम्रतरून् आकम्पयन् तथा दिक्षु चतसृषु इति शेषः परभृतस्य कोकिलस्य वचांसि कुहूरुतानि विस्तारयन् सुतरां नराणां हृदयानि हरन् सन् वाति वहति ॥ २२ ॥

कुन्दैरिति। सविभ्रमाणि विभ्रमसहितानि सविलासानि इत्यर्थः यानि बधूनां हसितानि हास्यानि तद्वत् अवदातैः सितैः (अवदातः सितो गौर इत्यमरः) कुन्दैः वासन्तिकपुष्पविशेषैः उद्योतितानि विराजितानि अतएव मनोहराणि उपवनानि निवृत्तः रागः विषयवासना यस्मात् तादृशं भोगनिस्पृहम् इत्यर्थः मुनेः अपि चित्तं मानसं हरन्ति मादयन्ति यूनां तरुणानां रागेण विषयानुरक्त्या मलिनानि दूषितानि मनांसि प्रागेव मुनिमनोहरणात् पूर्वमेव हरन्ति इत्यर्थः ॥२३॥

आलम्बिहेमरशनाः स्तनसक्तहाराः
कन्दर्पदर्पशिथिलीकृतगात्रयष्ट्यः।
मासि मधौ मधुरकोकिलभृङ्गनादैः
नार्य्यो हरन्ति हृदयं प्रसभं नराणाम् ॥२४॥

नानामनोज्ञकुसुमद्रुमभूषितान्तान्
हृष्टान्यपुष्टनिनदाकुलसानुदेशान्।
शैलेयजालपरिणद्धशिलातलौघान्
दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्वः ॥२५॥

आलम्बीति। मधौ चैत्रे मासि आलम्बिन्यः नितम्बदेशात् लम्बमाना हेमरशनाः स्वर्णकाञ्च्यो यासां ताः स्तनेषु सक्ताः लग्नाः हाराः यासां तादृश्यः हारशोभितस्तना इत्यर्थः तथा कन्दर्पस्य दर्पेण अहङ्कारेण शिथिलीकृता जड़ीकृता गात्र-यष्टिः अङ्गलता यासां कामशरार्त्ता इत्यर्थः नार्य्यः मधुरैः कोकिलानां भृङ्गाणाञ्च नादैः हेतुभिः नराणां हृदयं प्रसभं झटिति हरन्ति तादृशनारीदर्शनेन यूनां सहसा मदनोद्रेका-दिति भावः ॥ २४ ॥

नानेति। (अस्मिन् समये) सर्वः जनः नाना बहुविधानि मनोज्ञानि कुसुमानि येषां तैः द्रुमैः वृचैः भूषिताः अन्ता उपरिप्रदेशाः येषां तान् हृष्टानां प्रमुदितानाम् अन्यपुष्टानां कोकिलानां निनदैः कूजितैः आकुलाः व्याकुलाः अधीरा इत्यर्थः सानुदेशाः प्रदेशविशेषाः तद्वासिन इत्यर्थः येषां तादृ-शान् तथा शैलेयैः शिलाजतुनामकैः गन्धद्रव्यविशेषैः परि-णद्धाः व्याप्ताः शिलातलानां पाषाणखण्डानाम् ओघाः समूहाः येषां तथाभूतान् क्षितिभृतः पर्वतान् दृष्ट्वा मुदं हर्षम् आनन्द-मित्यर्थः एति प्राप्नोति ॥ २५ ॥

नेत्रे निमीलयति रोदिति याति शोकं
घ्राणं करेण विरुणद्धि विरौति चोच्चैः।
कान्तावियोगपरिखेदितचित्तवृत्तिः
दृष्ट्वाध्वगः कुसुमितान् सहकारवृक्षान् ॥२६॥

समदमधुकराणां कोकिलानां च नादैः
कुसुमितसहकारैः कर्णिकारैश्च रम्यैः।
इषुभिरिव सुतीक्ष्णैर्मानसं मानिनीनां
तुदति कुसुममासो मन्मथोद्दीपनाय ॥२७॥

आम्री मञ्जुलमञ्जरी वरशरः सत् किंशुकं यद्धनुः
ज्या यस्यालिकुलं कलध्वनियुतं छत्रं सितांशुः सितम्।

नेत्रे इति। कान्ताया वियोगेन विरहेण परिखेदिता व्याकुलिता चित्तवृत्तिः यस्य तादृशः अध्वगः पान्थः सहकारवृक्षान् कुसुमितान् दृष्ट्वा वसन्तकालमागतं विलोक्येत्यर्थः नेत्रे निमीलयति न किमपि पश्यतीत्यर्थः रोदिति क्रन्दति शोकं याति शोचतीत्यर्थः करेण हस्तेन घ्राणं नासिकां विरुणद्धि आवृणोति सौरभघ्राणभिया इति भावः तथा उच्चैः विरौति च हा प्रिये कथं मया त्वया च स्थीयते इति शब्दायते च ॥२६॥

समदेति। कुसुममासः वसन्तः समदानां मधुकराणां भ्रमराणां कोकिलानाञ्च नादैः तथा कुसुमितैः सहकारैः रसालैः रम्यैः कर्णिकारैश्च सुतीक्ष्णैः इषुभिः शरैरिव मन्मथोद्दीपनाय कामोद्दीपनाय मानिनीनां मानवतीनां नारीणां मानसं तुदति पीड़यति तादृशभ्रमरगुञ्जनेन कोकिलकूजनेन च मानिनीनां मानभङ्गो जायते इति भावः। मालिनी वृत्तमत्र ॥ २७ ॥

मत्तेभो मलयानिलः परभृतो यद्वन्दिनो लोकजित्
सोऽयं वो वितरोतु चैव वितनुर्भद्रं वसन्तान्वितः॥२८॥

ईषत् तुषारैः कृतशीतहर्म्ये
सुवासितं चारु शिरश्च चम्पकैः।
कुर्वन्ति नार्य्योऽपि वसन्तकाले
स्तनं सहारं कुसुमैर्मनोहरैः॥ २९॥

रुचिरकनककान्तीन् मुञ्चतः पुष्पराशीन्
मृदुपवनविधूतान् पुष्पितांश्चूतवृक्षान्।

आम्रीति। आम्री आम्रसम्बन्धिनी मञ्जुला मनोहारिणी मञ्जरी यस्य वरः उत्कृष्टः शरः सत् उत्तमम् अत्युज्ज्वलम् इत्यर्थः किंशुकं पलाशकुसुमं यस्य धनुः कलध्वनियुतं मधुरगुन्गुन्रवसहितम् अलिकुलं भ्रमरपङ्क्तिः यस्य ज्या मौर्वी सितांशुः चन्द्रः यस्य सितं शुभ्रं छत्रम् आतपत्रं मलयानिलः मलयपर्वतागतः पवनः यस्य मत्तेभः मत्तगजः तथा परैः काकैः भ्रियन्ते इति परभृतः कोकिलाः यस्य वन्दिनः स्तुतिपाठकाः वसन्तान्वितः वसन्तसहचरः सः अयं वितनुः अनङ्गश्चैव वः युष्माकं भद्रं मङ्गलं वितरोतु विदधातु। शार्दूलविक्रीड़ितं वृत्तं, सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ितमिति तल्लक्षणात्॥२८॥

ईषदिति। नार्य्योऽपि विलासिन्योऽपि वसन्तकाले वसन्तसमये ईषत् तुषारैः स्वल्पनीहारैः कर्त्तृभिः कृतं शीतं शीतलता येषु तादृशे हर्म्ये अट्टालिकायाम् चम्पकैः चम्पककुसुमैः शिरश्च चारु यथा स्यात् तथा सुवासितं सुरभीकृतं कुर्वन्ति तथा मनोहरैः शोभनैः अन्यैः विविधैः कुसुमैः स्तनं कुचं सहारं हारयुक्तं कुर्वन्ति॥ २९॥

रुचिरेति। (अस्मिन् समये) प्रवासी प्रियाविरहितः

अभिमुखमभिवीक्ष्य क्षामदेहोऽपि मार्गे
मदनशरनिघातैर्मोहमेति प्रवासी ॥ ३० ॥
परभृतकलगीतैर्ह्लादिभिः सद्वचांसि
स्मितदशनमयूखान् कुन्दपुष्पप्रभाभिः।
करकिसलयकान्तिं पल्लवैर्विद्रुमाभैः
उपहसति वसन्तः कामिनीनामिदानीम् ॥३१
कनककमलकान्तैराननैः पाण्डुगौरैः
उपरिनिहितहारैश्चन्दनार्द्रैः स्तनान्तैः।

पथिकः मार्गे पथि रुचिरकनकवत् मनोहरसुवर्णवत् कान्तिः शोभा येषां तादृशान् पुष्पराशीन् पुष्पचयान् मुञ्चतः विसृजतः तथा मृदुना मन्देन पवनेन विधूतान् ईषत् कम्पितान् पुष्पितान् सञ्जातकुसुमान् चूतवृक्षान् आम्रवृक्षान् अभिमुखम् अग्रे अभिवीक्ष्य दृष्ट्वा क्षामः क्षीणः देहो यस्य सः प्रियावियोगकृशोऽपि दुर्बलत्वात् प्रहरणानर्होऽपीत्यपेरर्थः मदनशरनिघातैः कन्दर्पबाणाघातैः मोहं मूर्च्छाम् एति प्राप्नोति ॥३०॥

परभृतेति। इदानीं वसन्ते वसन्तः वसन्तकालः ह्लादिभिः मधुरैः परभृतानाम् अन्यपुष्टानां कोकिलानां कलानि मधुराणि गीतानि तैः मधुरकोकिलनादैः कामिनीनां विलासिनीनां सन्ति वचांसि सद्वचांसि मधुरवचनानि तथा कुन्दपुष्पप्रभाभिः कुन्दकुसुमकान्तिभिः स्मितेन ईषद्धास्येन सहितान् दशनमयूखान् दन्तकिरणान् तथा विद्रुमाभैः प्रवालसङ्काशैः पल्लवैः नवकिसलयैः करकिसलयकान्तिं करपल्लवशोभाम् उपहसति अधरीकरोति ॥ ३१ ॥

कनकेति। स्तनभरेण नताः नार्य्यः कामिन्यः प्रशान्तान्

मदजनितविलासैर्दृष्टिपातैर्मुनीन्द्रान्
स्तनभरनतनार्य्यः कामयन्ति प्रशान्तान् ॥३२॥
मधुसुरभि मुखाब्जं लोचने लोध्रताम्रे
नवकुरुवकपूर्णः केशपाशो मनोज्ञः ।
गुरुतरकुचयुग्मं श्रोणिविम्बं तथैव
न भवति किमिदानीं योषितां मन्मथाय ॥३३॥
आकम्पितानि हृदयानि मनस्विनीनां
वातैः प्रफुल्लसहकारकृताधिवासैः ।

शान्तिगुणावलम्बिनः जितेन्द्रियानित्यर्थः मुनीन्द्रान् मुनिश्रेष्ठान् कनककमलकान्तैः सुवर्णपद्ममनोहरैः पाण्डुगौरैः पाण्डुवर्णैः आननैः मुखैः करणैः तथा उपरि अग्रे निहिता दत्ता हारा येषु तैः सहारैः चन्दनेन आर्द्रैः शीतलैः सचन्दनैः इत्यर्थः स्तनान्तैः कुचाग्रैः चुचुकैः इत्यर्थः तथा मदेन कामेन जनितः उत्पादितः विलासः विभ्रमः कटाक्षादिर्येषु तादृशैः दृष्टिपातैः सविलासकटाक्षैः कामयन्ति आकाङ्क्षन्ति अथवा कामिनः कुर्वन्ति ॥ ३२ ॥

मध्विति। इदानीं वसन्ते योषितां कामिनीनां मधुवत् सुरभि सुगन्धि मुखमेवाब्जं मुखकमलं तथा लोध्रताम्रे लोध्रपुष्पवदीषद्रक्ते लोचने नयने तथा नवैः अभिनवजातैः कुरुवकैः पूर्णः दत्तकुरुवककुसुमः मनोज्ञः मनोहरः केशपाशः केशकलापः तथा गुरुतरकुचयुग्मं कठिनस्थूलस्तनद्वयं तथैव श्रोणिविम्बं नितम्बविम्बम् एतेषां किं मन्मथाय कामोद्दीपनाय न भवति सर्वमेवेत्यर्थः ॥ ३३ ॥

आकम्पितानीति। (अस्मिन् समये) प्रफुल्लेन मुकुलितेन इत्यर्थः सहकारेण चूतवृक्षेण तत्संसर्गेण इत्यर्थः कृतः जनितः

सम्बाधितं परभृतस्य मदाकुलस्य
श्रोत्रप्रियैर्मधुकरस्य च गीतनादैः ॥ ३४ ॥
रम्यः प्रदोषसमयः स्फुटचन्द्रभासः
पुंस्कोकिलस्य विरुतं पवनः सुगन्धिः।
मत्तालियूथविरुतं निशि शीधुपानं
सर्वं रसायनमिदं कुसुमायुधस्य ॥ ३५ ॥
छायां जनः समभिवाञ्छति पादपानां
नक्तं तथेच्छति पुनः किरणं सुधांशोः।
हर्म्यं प्रयाति शयितुं सुखशीतलञ्च
कान्ताञ्च गाढ़मुपगूहति शीतलत्वात् ॥३६॥

अधिवासः सौरभ्यं येषां तैः वातैः वायुभिः मनस्विनीनां स्थिर-चित्तानामपि किमुत मदनकातराणामिति भावः हृदयानि चेतांसि आकम्पितानि क्षुब्धानि तथा मदाकुलस्य मदमत्तस्य परभृतस्य कोकिलस्य मधुकरस्य भ्रमरस्य च श्रोत्रप्रियैः श्रुति-सुखकरैः गीतनादैः कुहुरवैः गुञ्जनैश्च कर्त्तृभिः संबाधितं पीड़ितं (भावे क्तः) मनस्विनीनां मदनबाधा जनितेत्यर्थः ॥३४॥

रम्य इति। रम्यः रमणीयः प्रदोषसमयः सन्ध्यासमयः स्फुटाः शुभ्राः चन्द्रस्य भासः रश्मयः पुमान् कोकिलः तस्य विरुतं रवः सुगन्धिः सुरभिः पवनः वायुः मत्तस्य मदमत्तस्य अलियूथस्य भ्रमरसङ्घस्य विरुतं गुञ्जनं निशि रात्रौ शीधुपानं मद्यपानम् इदम् एतत् सर्वं कुसुमायुधस्य मदनस्य रसायनम् उद्दीपनम् ॥ ३५ ॥

छायामिति। ( अस्मिन् समये ) जनः पादपानां वृक्षाणां छायाम् अनातपं समभिवाञ्छति सम्यक् अभिलषति। तथा

मलयपवनविद्धः कोकिलेनाभिरम्यः
सुरभिमधुनिषेकाल्लब्धगन्धप्रबन्धः ।
विविधमधुपयूथैर्वेष्ट्यमानः समन्तात्
भवतु तव वसन्तः श्रेष्ठकालः सुखाय ॥३७॥

इति श्रीकालिदासकृतौ ऋतुसंहारे वसन्त-
वर्णनं नाम षष्ठः सर्गः समाप्तः ॥ ५ ॥

॥ समाप्तमिदम् ऋतुसंहारकाव्यम् ॥

नक्तं निशि पुनः सुधांशोः चन्द्रस्य किरणं ज्योत्स्नां इच्छति वाञ्छति तथा सुखं सुखजनकं शीतलं यस्मिन् तादृशं हर्म्यं सौधं शयितुं निद्रातुं प्रयाति गच्छति शीतलत्वात् शैत्याद्धेतोः शीतमुपशमयितुम् इत्यर्थः कान्तां प्रियां गाढ़ं निर्दयम् उपगूहति आश्लिषति ॥ ३६ ॥

मलयेति। मलयपवनः मलयमारुतः तेन विद्धः संसृष्टः कोकिलेन कोकिलरुतेन अभिरम्यः चित्तप्रसादकः तथा सुरभि सुगन्धि यत् मधु तस्य निषेकात् चरणात् लब्धः गन्धस्य प्रबन्धः समूहः येन तादृशः तथा समन्तात् चतुर्दिक्षु विविधमधुपयूथैः अनेकमधुकरपङ्क्तिभिः वेष्ट्यमानः व्याप्रियमाणः अतएव सर्वसुखाकरत्वात् श्रेष्ठकालः वसन्तः तव विलासिनः सुखाय भवतु ( आशंसायां लोट् ) ॥ ३७ ॥

इति ऋतुसंहारव्याख्यायां वसन्तवर्णनं नाम षष्ठः सर्गः ।

---

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचितम्
ऋतुसंहारकाव्यव्याख्यानं समाप्तम्।

---